# सुगन्धयात्रा

बालिका चन्दना श्रीगन्धवृक्षस्य पर्णानि गृहीत्वा आघ्रातवती । तया कोऽपि गन्धः न आघ्रातः एव । अतः सा वृक्षम् उक्तवती – ''भोः, भवान् न श्रीगन्धवृक्षः । भवतः पर्णेषु न सुगन्धः । भवान् मां वञ्चितवान्'' इति ।
''मम सुगन्धः अस्ति मम काण्डस्य हृदयभागे मूलेषु च । काण्डस्य हृदयभागः नाम कः इति ज्ञायते खलु ? त्वचः अन्तः काण्डं भवति । तन्मध्ये स्थितः भागः हृदयभागः इति उच्यते । मम मूलानि तैलांशसमृद्धियुक्तानि । अतः श्रीगन्धवृक्षाः न कर्त्यन्ते, अपि तु उन्मूल्यन्ते । तस्मात् तेषां मूलेषु स्थितस्य तैलांशस्य व्यर्थता निवारिता भवति ।''



श्रीगन्धतैलम् अधिकस्नेहमयं, सान्द्रपीतवर्णोपेतं, भारयुतं, सुगन्धयुतं च । एतस्य सौगन्ध्यं चिरस्थायि । श्रीगन्धतैले 'सन्तलोल्'नामकं मद्यसारांशोपेतं द्रव्यं भवति प्राधान्येन । तदेव सौगन्ध्यजनकम्, औषधत्वेन उपयोगे उपकारकं च । उत्तमस्तरीये श्रीगन्धतैले ९०% 'सन्तलोज्'- अंशः भवति प्रायः ।



*गतेभ्यः अशीतिवर्षेभ्यः श्रीगन्धस्य सुगन्धं गृहं गृहं प्रति आनयन्ती अस्ति मैसूरु-श्रीगन्धसंस्था ।*







## श्रीगन्धः ज्ञायताम्

अधोनिर्दिष्टानि वाक्यानि युक्तानि उत न इति वदन्तु –

१. मल्लिका-पाटलपुष्पादिभिः नैसर्गिकक्रमेण यत् सुगन्धद्रव्यम् उत्पाद्यते तत्र श्रीगन्धतैलस्य उपयोगः क्रियते ।

२. आहारपदार्थेषु पयोहिमादीनाम् इव श्रीगन्धतैलस्यापि उपयोगः क्रियते ।

३. शिरोवेदना-ज्वरादीनां निवारणाय ललाटे श्रीगन्धपङ्कस्य लेपनं क्रियते ।

उत्तरम् – सर्वाणि वाक्यानि युक्तानि ।
















# Heroes start early.

Ride, race, take a tumble or even take a fall.
Because it's never too early to be a hero.



# ज्ञायतां गुहाविषये

गुहाः नाम काः इति वयं जानीमः एव । ताः पर्वतादिभूमिषु निर्मिताः भवन्ति । एकस्य पुरुषस्य सञ्चारादिनिमित्तं पर्याप्ताः भवन्ति ताः प्रायः ।

आगच्छन्तु, आन्ध्रप्रदेशस्य कर्नूल्‌जनपदे स्थितानां बेलुंगुहानां परिचयं प्राप्नुयाम । भारते स्थितासु गुहासु अतिदीर्घाः एताः । अत्र गुहानां सरणिः एव अस्ति । एषा गुहासरणिः प्रायः त्रिकिलोमीटर्‌दीर्घा स्यात् । तत्र द्विकिलोमीटर्‌दीर्घः प्रदेशः इदानीं दर्शनयोग्यः सञ्चारयोग्यः च अस्ति ।

बेलुंगुहाः दीर्घाकारिकाः । यदि एतासां प्रवेशः क्रियते तर्हि किञ्चिद्दूरं गमनानन्तरं विशालं प्राङ्गणं प्राप्यते । तत्र निर्मलजलस्य उत्सः दृश्यते । गुहाभित्तितः नलिकाकारात् चापि जलं स्रवत् दृश्यते । प्राङ्गणतले वल्मीकः अपि दृश्यते । जलस्थः अङ्गाराम्लवायुः सुधाशिलासु यदा विलीनः भवति तदा फेनाकारतां प्राप्तवत् जलं बिन्दुरूपेण गुहाछदितः पतति । एतैः जलबिन्दुभिः सह खनिजांशाः अपि यदा युक्ताः भवन्ति तदा हिमनलिकाः निर्मिताः भवन्ति । तादृश्यः हिमनलिकाः छदिषु लम्बन्ते । ताभ्यः पतिताः जलबिन्दवः लघुशिखराकारतां प्राप्य प्राङ्गणे दृश्यन्ते ।

आन्ध्रप्रदेशीयया प्रवासोद्यमसंस्थया बेलुंगुहाः दर्शनीयस्थलत्वेन सज्जीकृताः सन्ति । तया गुहासु स्थितान् पङ्कान् अपनीय गमनागमनाय मार्गं प्रकल्प्य स्वच्छतादिकं कृत्वा गुहानां दर्शनीयता कल्पिता अस्ति । गुहायाः अन्तर्भागे क्वचित् यत्र वायुः अल्पप्रमाणेन वाति तत्र शुद्धवायुप्रसारणव्यवस्था अपि उपकल्पिता अस्ति । वायुप्रसारकयन्त्राणि एतत् कार्यं समर्थतया निर्वहन्ति ।

एतासां गुहानां प्रवेशाय सोपानपङ्क्तिव्यवस्था अपि उपकल्पिता अस्ति । एतस्याः गुहासरण्याः प्रथमं प्राङ्गणं निर्दिश्यते 'सिंहद्वारम्' इति । अत्र रमणीयः कश्चन जलाशयः, उत्सः, जलपातः च दृश्यते । गुहायां स्थितेषु प्राङ्गणेषु एतदेव विशालतमम् । एतस्याः औन्नत्यं नवमीटरात्मकम् अस्ति ।

अग्रिमम् अपरं प्राङ्गणम् उच्यते 'मण्डपम्' इति । अत्र विशालं सभाङ्गणम् अस्ति । छदौ हिमनलिकाः लम्बमानाः दृश्यन्ते । ततोऽपि अग्रे गतं चेत् तृतीयं प्राङ्गणं प्राप्यते, यस्य च नाम अस्ति 'पातालगङ्गा' इति । अत्र लघुः जलपातः दृष्टिगोचरतां याति । एतस्याः गुहासरण्याः केषुचित् स्थलेषु विंशतिमीटरौन्नत्यम् दृश्यते । गुहायाम् आन्तं काचित् जलधारा प्रवहति । एषा जलधारा गुहायाः शोभां वर्धितवती अस्ति ।

इतोऽपि अग्रे गतं चेत् अपरं प्राङ्गणं प्राप्यते, यत्र असङ्ख्याः हिमनलिकाः लम्बमानाः दृश्यन्ते । एतत् प्राङ्गणम् उच्यते 'कोटिलिङ्गम्' इति । असङ्ख्याः हिमनलिकाः अधोमुखतया स्थापितानि लिङ्गानि इव दृश्यन्ते । अतः कोटिलिङ्गम् इति एतस्य नाम । एतस्य परिसरस्य दर्शनात् भासते यत् हिमालयः एव अत्र अधोमुखतया स्थापितः इति । एताः हिमनलिकाः विविधैः वर्णैः शोभन्ते अपि । अत्र कारणं

# बेलुंगुहाः

## प्रकृतिवैचित्र्यरूपाः !

- तासु स्थितः खनिजांशः ।

कोट्यधिकवर्षपुरातनाः एताः गुहाः आधुनिकजगतः कृते परिचायिताः आंग्लेयेन भूगर्भशास्त्रज्ञेन राबर्ट्ब्रूस् फूट्वर्येण । एषा घटना १८८४ तमे वर्षे प्रवृत्ता । ततः शतवर्षाणाम् अनन्तरं, तत्राम १९८२-१९८३ तमवर्षयोः मध्यकाले जर्मनीयस्य डेनियल् गेबौर्नामकस्य नायकत्वेन युक्तः कश्चन गुहान्वेषकगणः बेलुंगुहायाः स्वरूपं समग्रतया व्यवृणोत् । गुहानां भौगोलिक-पुरातत्त्वादिस्वरूपाणां वैज्ञानिकाध्ययनाय एव गुहान्वेषणशास्त्रं विकासितम् अस्ति एषु दिनेषु । १९९१ तमे वर्षे आन्ध्रप्रदेशीयया प्रवासोद्यमसंस्थया (ए. पि. टि. डि. सि.) एतासां गुहानां निर्वहणाधिकारं स्वायत्तीकुर्वत्या दर्शनीयस्थानत्वं परिकल्पितम् ।

स्मरन्तु - अवश्यं द्रष्टव्येषु अन्यतमाः सन्ति बेलुंगुहाः । ताः प्राकृतिकवैचित्र्यस्य असदृशानि उदाहरणानि सन्ति ।





**प्राप्तिमार्गः** - एताः बेलुंग्रामसमीपे सन्ति । स च ग्रामः कर्नूल्जनपदे कोलिमिगुण्ड्लमण्डले अस्ति । समीपस्थ-नगरेभ्यः एतत् स्थानं प्रति लोकयानानि आयान्ति । एतत् कर्नूल्तः ११० कि.मि.दूरे अस्ति । (बनगनपल्लीमार्गेण गन्तव्यम् ।) * ताडिपत्रितः ३१ कि.मी.दूरे * अनन्तपुरतः ८४ कि.मी.दूरे * बेङ्गलूरुतः २७० कि.मी.दूरे च अस्ति । एताः गुहाः प्रति विद्यालयच्छात्राणां प्रवासाय आन्ध्रप्रदेशीया प्रवासोद्यमसंस्था मार्गदर्शनं यानव्यवस्थां च कर्तुम् अर्हति ।

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ अगस्ट् - २००२ सञ्चिका - ०५



पुराणकथावली २५



महेशस्य महिमा (वेतालकथा) १९



मायासरोवरम् ११



विघ्नेश्वरः ४५



## अन्तरङ्गम्




SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandamama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/2661946/2653057



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# देशाभिवृद्धिः प्रजाः अवलम्बते

भारतं ५५ वर्षेभ्यः पूर्वं स्वतन्त्रं जातम् । कृषिप्रधानत्वेन स्थिताः वयं यन्त्रोद्यम-प्रगतिक्षेत्रे क्रमेण पदानि स्थापयन्तः अग्रे आगताः । बाह्याकाशक्षेत्रे अण्वस्त्रनिर्माणक्षेत्रे च अस्माकं देशस्य प्रगतिः समग्रे प्रपञ्चे प्रशंसापात्रतां गता अस्ति ।

एतस्य कारणतः वयं गर्वं वहामः । एतदवसरे अस्माभिः गाम्भीर्येण चिन्तनीयम् अस्ति यत् वयं स्वस्य भूतकालीनां परम्परां सर्वथा न त्यक्तवन्तः खलु इति । गान्धीजी कदाचित् उक्तवान् आसीत् - ''मम गृहस्य द्वाराणि वातायनानि च पिहितानि न भवेयुः इति अहम् इच्छामि । जगतः सर्वसंस्कृतीनां वायुः मम गृहे कामं वातु नाम । किन्तु मम पादौ तु मदीये गृहे दृढतया तिष्ठेतां सदापि'' इति । स्वामी विवेकानन्दः अपि भारतीयान् उद्बोधितवान् आसीत् - ''अस्माकं परम्परा, संस्कृतिः, अस्मिता च संरक्षणीया, परिवर्धनीया च'' इति ।

एतस्मिन् विषये जपानजर्मनीदेशौ अनुकरणयोग्यौ स्तः । द्वितीयजागतिकयुद्धस्य काले तौ उभौ अपि ध्वस्तौ जातौ आस्ताम् । किन्तु अचिरात् एव तौ उज्जीवनं प्राप्तवन्तौ देशाभिमानस्य कारणतः । एतत् पुनरुज्जीवनं ताभ्यां साधितं दशवर्षाभ्यन्तरे एव ।

देशस्य शक्तिः तत्रत्याः प्रजाः अवलम्बते । ५५ तमस्य स्वातन्त्र्यदिनाचरणस्य अवसरे एतत् वयं पुनरपि स्मराम । देशं प्रबलशक्तिसमेतं कर्तुं सम्भूय प्रयत्नं करवाम ।

---

सम्पादकः - विश्रम्

Visit us at : http://www.chandamama.org

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-११

**अधुनातने भारते सन्ति एव बहवः नायकाः । तेषु कांश्चन अधिकृत्य अत्र सन्ति प्रश्नाः । उत्तरं दीयताम् ।**

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1 जीवने या सिद्धिः प्राप्ता तत्कारणतः चलनचित्रनिर्देशकेन (भारतीयेन) मया एकेन एव आस्करप्रशस्तिः प्राप्ता । मम नाम किम् ? ..........................................

2 मया १९८७ तमे वर्षे प्रथमः जागतिकाहारप्रशस्तिः प्राप्ता । 'हरितक्रान्तेः प्रवर्तकः' इति जनाः मां निर्दिशन्ति । अहं कः ?

..........................................

3 अहं कश्चन मराठीनाटकरचयिता । मम नाटकानां वैशिष्ट्यं नाम - तानि निर्दाक्षिण्यं विषयं निरूपयन्ति । किं भवन्तः मम नाम जानन्ति ?

..........................................

4 अहं प्रथमः भारतीयगगनयात्रिकः । मम नाम किम् इति एतावता ज्ञातवन्तः स्युः एव खलु भवन्तः ?

..........................................

5 ओडिस्सिनृत्यक्षेत्रे अहं सुविख्यातः । मया पद्मश्रीप्रशस्तिः पद्मविभूषणप्रशस्तिः चापि लब्धा । मम नाम किम् ?

..........................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ..........................................

..........................................

..........................................

..........................................

भागग्रहीतुः नाम ..........................................

वयः .................... कक्ष्या ....................

सङ्केतः ..........................................

..........................................

..........................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-११**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काडुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, सप्टम्बर्, २००२

***नियमाः*** -

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

# विज्ञानी राष्ट्राध्यक्षत्वेन

भारतस्य एकादशः राष्ट्रपतिः अस्ति डा॰ ए.पि.जे. अब्दुल् कलामवर्यः, यश्च भारतस्य अतिश्रेष्ठः विज्ञानी अस्ति । सः देशस्य श्रेष्ठप्रजत्वेन चितः अभवत् जुलैमासस्य २५ तमे दिनाङ्के । देशस्य श्रेष्ठः विज्ञानी कश्चित् एतस्मिन् पदे तिष्ठन् अस्ति यत् तत् तु ऐदम्प्राथम्येन जायमानम् अस्ति ।



कलामवर्यस्य पूर्णं नाम डा॰ अबुल् फकीर् जैनिलाबदीन् अब्दुल् कलाम् इति । सः १९३१ तमे वर्षे रामेश्वरे मध्यमवर्गीये कुटुम्बे जन्म प्राप्तवान् । तस्य पितुः यन्त्रनौकाद्वयम् आसीत् । तदुभयं धनुष्कोटितः रामेश्वरपर्यन्तं सञ्चालयति स्म सः । अब्दुल् कलामः तदीयेषु सप्तसु पुत्रेषु कनिष्ठतमः । तदीयः दशमकक्ष्यान्तः विद्याभ्यासः रामनाथपुरे क्रिश्चियन्मिशनरीविद्यालये प्रवृत्तः । त्रिचिरापल्लि-नगरे सेण्ट् जोसेफ् महाविद्यालयात् भौतशास्त्रीय-पदवीं प्राप्य वैमानिकशस्त्रं पठितुं सः मद्रास्नगरीयम् 'इन्स्टिट्यूट् आफ् टेक्नोलजी' इत्येतां संस्थां प्रविष्टवान् ।

तत्र स्नातकोत्तरपदवीं प्राप्तवान् सः सैन्यीयां संशोधनाभिवृद्धिसंस्थानं प्रविष्टवान् । तत्रैव तेन चत्वारिंशद्वर्षाणि यावत् उद्योगः कृतः । 'अग्निः' 'पृथिवी' इत्यादीनां क्षेपणीनां निर्माणावसरे विशेषदायित्वं निरूढं तेन । अत्र प्राप्तायाः सिद्धेः कारणतः सः 'क्षेपणीजनः' (मिसैल् मेन्) इत्येव ख्यातिं गतः । पोखान्प्रदेशे यः अण्वस्त्रस्फोटनकार्यक्रमः प्रवृत्तः तत्रापि तेन प्रमुखं पात्रं निरूढम् । अनन्तरकाले सः भारतसर्वकारस्य वैज्ञानिकमार्गदर्शकपदं प्राप्तवान् । भारतरत्नबिरुदेन सः सम्मानितः अस्ति देशेन ।

निवृत्तेः अनन्तरं कलामवर्यः ऐच्छत् यत् बालानां तरुणानां च मध्ये मया कालः यापनीयः इति । सः देशस्य आशाज्योतिषां छात्राणां गणान् उद्दिश्य बहूनि भाषणानि अकरोत् । गान्धिवर्यस्य जन्मस्थले पोरबन्दरे काचित् बालिका तदीयं सन्देशम् अपेक्षितवती । तदा सः अलिखत् यत् व्यष्टिहिततः अपि समष्टिहितम् एव श्रेष्ठम् इत्येतां भावनां प्राप्यैव सर्वे बालकाः वृद्धिं गच्छेयुः इति । 'मम जीवने भारतीयत्वम् एव प्रमुखं सर्वोच्चं च' इति वदन् सः अपेक्षते यत् २०२० तमवर्षाभ्यान्तरे अस्माकं देशः पूर्णतया विकसितः भवेत् इति ।

कलामवर्यः उर्दूभाषया रचितं कुरान्ग्रन्थं यया आसक्त्या श्रद्धया च पठति, तया एव आसक्त्या श्रद्धया च पठति संस्कृतेन रचितां भगवद्गीताम् अपि । सः वीणावादने रुचिमान् इति तु केचन एव जानन्ति ।

१९४७ तमे वर्षे अगस्ट्मासस्य १५ दिनाङ्के भावचित्रद्वयं प्रकाशितम् आसीत् पत्रिकासु । एकं तु राष्ट्रध्वजम् उद्धाययतः नेहरूवर्यस्य चित्रम् । अपरं च गान्धिवर्यस्य, यश्च मतीयसङ्घर्षेण पीडिते नौखोलीनगरे सञ्चरन् वदति – ''देशस्य नायकत्वं विशेषगुणार्हतां प्राप्तवत् स्यात्'' इति । अद्य देशेन तादृशं नायकत्वं प्राप्तम् अस्ति । *चन्दमामा* स्वस्य सहस्रशः वाचकानां प्रतिनिधित्वेन डा॰ कलामवर्यं सहर्षम् अभिनन्दति ।

# जलात् भीतिः

जनकपुरी कश्चन लघुग्रामः । ग्रामसमीपे एव एकः कासारः आसीत् । तत्र ग्रामस्य जनाः तरणस्य अभ्यासं कुर्वन्ति स्म । यदि प्रवाहादिपीडा स्यात्, यदि वा जलबन्धः भग्नः स्यात् तर्हि तरणज्ञानम् उपकाराय स्यात् इति जनानाम् आशयः आसीत् ।

गोविन्दः तस्यैव ग्रामस्य चत्वारिंशद्वर्षीयः कृषिकः । सः उन्नतकायः आसीत् । सः तरणं सर्वथा न जानाति स्म । तरणस्य अभ्यासः करणीयः इति कोऽपि तं यदि वदेत् तर्हि सः वदति स्म – ''जलात् महती भीतिः मम । अन्यच्च अहम् उन्नतकायः अस्मि । यदि अहं कासारे पतेयं तर्हि जले निमग्नः तु न स्याम् । अतः तरणस्य आवश्यकता अपि का ?'' इति ।

एकदा सः कृषिक्षेत्रतः प्रत्यागच्छन् आसीत् । वर्षाकालः सः । यदा सः कासारतीरे गच्छन् आसीत् तदा महती वृष्टिः आगता । अन्धकारः अपि आसीत् तदा । अतः किमपि स्पष्टं न दृश्यते स्म । तस्मात् सः कासारे पतितः । 'अहो, किम् एतत् प्रवृत्तम् ! अहं तरणम् अपि न जानामि । मम मरणं निश्चितम् इदानीम्' इति चिन्तयन् सः हस्तपादादिकं चालितवान् भीत्या ।

तदा तेन अकस्मात् स्मृतं यत् कासारे अधिकं जलं नास्ति इति । एतत् स्मृत्वा सः कासारतले पादौ स्थापयित्वा तिष्ठन् अचिन्तयत् – 'अहो, मूर्खता मम ! अधिकजलस्य अभावे अपि मरणभीतिः उत्पन्ना मम । तरणस्य अज्ञानम् एव अत्र कारणम् । मरणभीतितः मम मतिः चिन्तनशक्तिहीना जाता । अतः मया शीघ्रातिशीघ्रं तरणं ज्ञातव्यं, येन पुनः एतादृशी स्थितिः न स्यात्' इति ।





# मायासरोवरम्

## ९

*[वन्यगजान् दूरं प्रेषयित्वा मकरमुखः चरकाचार्यस्य अन्वेषणे उद्युक्तः जातः । अजगरेण गृहीतः चरकाचार्यः स्वस्य प्राणानां रक्षणार्थं ताम्यन् आसीत् । जयशीलः तम् अजगरात् रक्षित्वा यावत् किमपि पृच्छन् आसीत् तावता मकरमुखः तत्र आगतवान् । तस्य दर्शनात् जयशीलस्य हस्तः खड्गस्य त्सरुम् अगृह्णात् सहजतया । सिद्धसाधकः स्वस्य मन्त्रदण्डम् उन्नीतवान् । तदनन्तरम् ......]*

मकरमुखः चिन्तितवान् आसीत् यत् मम आकारं, मदीयं गजं च दृष्ट्वा एतौ भीतौ भवेताम् इति । किन्तु जयशीलः सिद्धसाधकः च धैर्येण स्थितवन्तौ आस्ताम् । एतस्मात् तस्यैव धैर्यं क्रमेण क्षीयमाणं जातम् । सः यथा चिन्तितवान् तथा एतौ पलायनं न कृतवन्तौ एव । पलायनलक्षणम् अपि न दृश्यते स्म तयोः व्यवहारे ।

अतः सः शूलम् उन्नीय उच्चस्वरेण अपृच्छत् – ''भोः, कौ भवन्तौ ? एतस्मिन् अरण्ये किं वा कार्यं भवतोः ?'' इति ।

तदा जयशीलः कोषात् खड्गं निष्कास्य – ''भवतः आकारस्य दर्शनात् उद्गच्छन्तं हासं निरोद्धुं न शक्नोमि अहम् । मया यत् प्रष्टव्यम् आसीत् तत् भवता एव पृष्टम् । तदस्तु, एतस्मिन् अरण्ये किं कार्यं भवतः ? भवान् यं गजम् आरूढवान् अस्ति सः अपि विलक्षणेन चर्मणा आवृतः अस्ति इति भाति । एषः विचित्रः वेषः किमर्थं धृतः भवता ?'' इति अपृच्छत् ।

''अये क्षुद्रमानव ! एतत्सर्वं मां पृच्छतः कियत् धार्ष्ट्यं भवतः ?'' इति वदन् सः



मकरमुखः स्वस्य गजं चोदितवान् अग्रे गमनाय ।

तदा तस्य पृष्ठतः स्थितः वीरः मकरमुखस्य उभौ अपि हस्तौ गृह्णन् - ''मकरमुखमहोदय ! किञ्चित् शान्तः भवतु भवान् । भवान् महावीरः एव इत्यत्र नास्ति सन्देहः । किन्तु भवता न विस्मर्तव्यं यत् स्वस्य उदरे खड्गः इतोऽपि लग्नः अस्ति इति । अतः तयोः वीरयोः विरोधः न श्रेयसे । अन्यच्च, चरकाचार्यः अपि भवतः चिकित्सायां न समर्थः एतावता अपि'' इति अवदत् ।

वीरस्य कथनात् मकरमुखः चरकाचार्यं स्मरन् तस्य दिशि दृष्टिं प्रसारितवान् । चरकाचार्यः तु उत्थातुं प्रयतमानः आसीत्, किन्तु न शक्नोति स्म । तस्य पार्श्वे विदारितशिरस्कः अजगरः अपि ताम्यन् आसीत् । एतत्सर्वं दृष्ट्वा मकरमुखः क्षणकालम् आश्चर्येण स्तब्धः । ततः सः चरकाचार्यम् उद्दिश्य अवदत् - ''चरकाचार्य ! मम चिकित्सार्थम् आगतः भवान् किम् अजगरग्रहणव्यामोहे पतितः ? प्रायः भवान् अजगरं कन्दमूलसदृशं भावितवान् स्यात् । यदि भवान् इच्छेत् तर्हि तादृशम् अपि गजम् अहं भवते दद्यां, यश्च गजस्यापि गिलने समर्थः स्यात्'' इति ।

अनन्तरं सः जयशीलं सिद्धसाधकं च क्रोधेन पश्यन् - ''किं भवन्तौ इतोऽपि अत्रैव स्तः ? यदि प्राणाः प्रियाः स्युः तर्हि इतः पलायनं क्रियताम् । अन्यथा मम शूलं भवतोः उरः विदारयिष्यति'' इति ।

एतत् श्रुत्वा जयशीलः खड्गम् उन्नीय एकं पदम् अग्रे स्थापितवान् । एतत् दृष्ट्वा वीरः उच्चस्वरेण - ''अये खड्गवीर ! अलं साहसेन । एतस्य मकरकायस्य विषये खड्गप्रयोगः किमर्थम् ? एषः तु असहायः इदानीम् । एतस्य उदरे खड्गखण्डः लग्नः अस्ति । यदि सः ततः न निष्कास्येत तर्हि रक्तस्रावकारणतः एषः अचिरात् एव मरणं प्राप्नुयात् अपि । अतः शान्तः भवतु'' इति अवदत् ।

''विना कारणम् एतस्य मारणे ममापि इच्छा नास्ति । एतस्य उदरे यः खड्गखण्डः लग्नः अस्ति तस्य अपराधं कनकाक्षमहाराजसमीपे अस्ति'' इति अवदत् जयशीलः ।

जयशीलस्य वचनं श्रुत्वा महान्तं क्रोधं प्रकटयन् सः मकरमुखः - ''भवतः कथनस्य श्रवणात् सिध्यति यत् अहं कः इति भवान् जानाति इति'' इति अवदत् ।

''आम् । जानामि । भवान् एतस्मिन् अरण्ये राजकुमारं राजकुमारीं च अपहृतवान् । भवतः उदरे यः खड्गखण्डः अस्ति सः तु राजकुमारस्य काञ्चनवर्मणः अस्ति'' इति अवदत् जयशीलः ।

''सकलं वृत्तान्तं जानतः भवतः प्राण-सहिततया स्थितिः न श्रेयसे'' इति वदन् गजम् अग्रे प्रेरयन् तौ उद्दिश्य स्वस्य शूलम् उन्नीतवान् मकरमुखः । तावति काले वीरः स्वस्य हस्ताभ्यां तत् शूलं गृहीतवान् । वीरस्य ग्रहणं निवारयितुं मकरमुखः बलात् शूलम् अग्रे आकृष्टवान् । एतस्मात् समस्थितितः च्युतः सन् वीरः भूमौ अपतत् ।

एतस्य सुवर्णावसरस्य लाभं प्राप्नुवन् जयशीलः झटिति अग्रे गत्वा गजं पृष्ठभागतः आरुह्य मकरमुखस्य कण्ठं गृहीतवान् । अत्रान्तरे भूमौ स्थितः सिद्धसाधकः - 'जय महाकालि !' इति वदन् वीरम् उत्थापितवान् । मकरमुखः तु शूलप्रयोगे असमर्थः जातः । न केवलं तावत्, सः जयशीलस्य अधीनः अपि जातः ।

जयशीलः स्वस्य खड्गं मकरमुखस्य कण्ठस्य पृष्ठभागे गृह्णन् - ''अये, वदतु तावत् । कः भवान् ? किं नाम भवतः ? यदि भवान् मम आदेशं न पालयेत् तर्हि एषः मम खड्गः भवतः शिरः शरीरात् पृथक् करिष्यति'' इति अवदत् ।

तदा मकरमुखः अवदत् - ''अये मानव ! अहं पराजयं अङ्गीकृतवान् अस्मि'' इति ।

तदा जयशीलः अवदत् - ''भोः, पराजयाङ्गीकारमात्रेण किम् ? किं नाम



भवतः ? मम आदेशः विना विरोधं पालनीयः भवता । हिरण्यपुरस्य राज्ञः कनकाक्षस्य समीपं नयतु गजम् । राजकुमारः राजकुमारी च कुत्र गोपितौ इति राजानं वदतु'' इति ।

''मम नाम मकरकेतुः इति । राजकुमारी राजकुमारः च कुत्र स्तः इति कथनाय राजसमीपं किमर्थं गन्तव्यम् ? तं विषयम् अत्रैव भवन्तं वदिष्यामि'' इति अवदत् मकरमुखः ।

''किं माम् उद्दिश्य कथनेन ? यत् वक्तव्यं तत् राज्ञः पुरतः एव वक्तव्यं भवता । अतः हिरण्यपुरं प्रति गजं नयतु । मध्येमार्गं यदि पलायनार्थं प्रयत्नः क्रियेत, यदि वा वञ्चना-मार्गः कोऽपि आश्रीयेत तर्हि एषः मम खड्गः किं करिष्यति इति स्मर्यते खलु भवता ?'' इति अवदत् जयशीलः ।

मकरकेतुः जयशीलस्य आज्ञाम् अङ्गी-



कृतवान् । स्वस्य गजं हिरण्यपुरं प्रति गमनाय चोदितवान् ।

सिद्धसाधकः गजेन सह आगच्छन् जयशीलम् अवदत् – ''जयशील ! हस्तं किञ्चित् प्रसारयतु तावत् । अहम् अपि गजम् आरोहामि'' इति ।

जयशीलः हस्तप्रसारेण सिद्धसाधकं गजस्य उपरि उपवेशितवान् । यदा गजः ततः निर्गन्तुम् उद्युक्तः तदा चरकाचार्यः करताडनेन जयशीलस्य अवधानम् आकर्षन् – ''महोदय ! क्षणं स्थीयताम् । अस्माकं ग्रामः इतः न बहुदूरे । तथापि एतत् घोरम् अरण्यं तु अतिक्रमणीयम् एव ग्रामं प्राप्तुम् । अत्र सिंहव्याघ्रादयः क्रूरजन्तवः सन्ति । ते अस्मान् न खादेयुः खलु ? इदानीं किं करणीयम् आवाभ्याम् ?'' इति अपृच्छत् ।

''अलं भीत्या । अत्र कोऽपि भवतोः रोम अपि कम्पयितुं न अर्हति । भवन्तौ एतस्य चिकित्सार्थम् उद्युक्तौ आस्तां यत् ततः एव एषः दुष्टः अस्माकं हस्तगतः अभवत् । अतः भवतोः रक्षणम् अस्माकं कर्तव्यम् । भवन्तौ गजम् अनुसृत्य आगच्छताम् । गजं मन्दगत्या नेष्यामः वयम्'' इति अवदत् जयशीलः ।

सर्वे हिरण्यपुरं प्रति प्रस्थितवन्तः । किञ्चिद्दूरं गमनानन्तरं चरकाचार्यः अवदत् – ''प्रभो, अस्माकं काचित् विज्ञप्तिः अस्ति'' इति ।

तत् श्रुत्वा आश्चर्येण पृष्टवान् जयशीलः – ''का सा विज्ञप्तिः भवताम् ?'' इति ।

''अहम्, एषः वीरः च प्रातःकालतः एतस्य मकरमुखस्य चिकित्सायाम् उद्युक्तौ स्वः । अन्यस्य कस्यचित् उदरे यदि खड्गः एवं लग्नः स्यात् तर्हि सः एतावता एव यमलोकं गतः स्यात् । किन्तु एषः तु तं खड्गम् आभूषणम् इव उदरे वहति । एतस्मात् अहम् एतस्य परीक्षणं कृतवान् । तदा मया ज्ञातं यत् एषः शीतरक्तजीवी इति । मम तु भासते यत् एषः जलवासी कश्चित् स्यात् इति'' इति अवदत् चरकाचार्यः ।

''भवतः कथनं तु एवं यत् एषः मण्डूकः इव उभयजीवी इति ? जले अपि जीवति एषः, स्थले अपि जीवति इति खलु भवतः कथनस्य तात्पर्यम् ? कनकाक्षस्य कार्यं यदा सिद्धं भविष्यति तदा एतं भवते एव उपायनीकरिष्यामि । तदा भवान् वैद्यशास्त्रसम्बद्धं यद्यत् गवेषणं कर्तुम् इच्छति तत्सर्वं कर्तुम् अर्हति'' इति अवदत् जयशीलः ।

तयोः एतं संवादं श्रुत्वा मकरकेतुः महान्तं

क्रोधं प्राप्तवान् । एतत् जानन् जयशीलः अवदत् – ''अये मकरकेतो ! जागरूको भवतु । यदि दुस्साहसं किमपि क्रियेत तर्हि भवतः मुण्डं रुण्डात् पृथग्भवेत् । स्मरतु एतत्'' इति ।

अत्रान्तरे कश्चन बाणः कुतश्चित् आगत्य मकरकेतुसमीपे अपतत् । अनन्तरक्षणे उच्च-ध्वनिः अपि श्रुतः – ''अये मकरमुख ! मया यं वन्यकुक्कुटम् उद्दिश्य बाणः प्रयुक्तः सः कुक्कुटः भवता अपहृतः । अतः मम बाणप्रहारस्य रुचिम् आस्वदतां किञ्चित्'' इति ।

जयशीलः सिद्धसाधकः च एतं कण्ठ-ध्वनिम् अभिज्ञातवन्तौ । एवं कथयिता आसीत् भिल्लजातीयः भीमः । सिद्धसाधकः स्वस्य मन्त्रदण्डम् उन्नीय अवदत् – ''अये भिल्ल-भीम ! यदि पुनरपि बाणप्रयोगः क्रियेत तर्हि भवान् महाकाल्याः बलिः भवेत् । स्मरतु एतत् । वृक्षात् अवतरतु तावत्'' इति ।

''कः भवान् ? किं भवान् राज्ञः भूत-वैद्यः ?'' इति दूरात् एव अपृच्छत् भिल्ल-भीमः ।

''अहं न भूतवैद्यः, अपि तु मान्त्रिकः । सिद्धासाधकः अस्मि अहम् । यदि वृक्षात् अवतरणं न क्रियते तर्हि मया मन्त्रः पठ्यते । तदा शाखासु आकस्मिकतया अग्निः उत्पन्नः भविष्यति । भवान् अग्निना दग्धः भविष्यति'' इति अवदत् सिद्धिसाधकः ।

''किं सः भिल्लभीमः मां लक्ष्यीकृत्य बाणं प्रयुक्तवान् ? अहं तु मायासरोवरस्य अधिपतिः अस्मि । तादृशस्य मम अहो, ईदृशी दुर्दशा !! अहो, कालस्य विपरिणामः ! किन्तु अहम् एतत् सर्वथा न सहे । मम गजः इदानीं तं वृक्षम् उन्मूल्य पातयिष्यति । ततः तं स्वस्य पादाघातैः मारयिष्यति अपि । तदा एव मम तृप्तिः'' इति वदन् मकरकेतुः स्वस्य गजं वृक्षसमीपं नीतवान् ।

जगशीलः मकरकेतोः एतं प्रयत्नं निवारयितुं प्रयत्नं कृतवान् । किन्तु तावता मकरकेतोः गजः उच्चैः घीङ्कुर्वन् वृक्षसमीपम् अगच्छत् एव । शिरसा घट्टयित्वा शुण्डया गृहीत्वा उन्मूल्य वृक्षं भूमौ अपातयत् सः । एतस्मात् वृक्षशाखायाम् उपविष्टः भिल्लभीमः उच्चैः आक्रन्दनं कृतवान् ।

– *(अनुवर्तते)*





# लक्षरूप्यकात्मकः पाषाणः

माधवः विंशतिवर्षीयः दरिद्रः युवकः। सः आदिनं क्षेत्रे कार्यं करोति स्म। किन्तु उदरं पूरयितुमपि अपर्याप्तः आसीत् तस्य आयः। अतः सः अधिकं ये अर्जयन्ति तेभ्यः असूयति स्म।

कदाचित् तटाकस्य पार्श्वे शिलायाम् उपविष्टः कश्चन संन्यासी तेन दृष्टः। सः संन्यासी माधवं पृष्टवान् – ''किं जातं भवतः ? किमर्थं दुःखी इव भासते भवान् ?'' इति।

तदा माधवः स्ववृत्तान्तं समग्रं निवेद्य – ''श्रमानुगुणं फलं प्राप्तव्यमिति मम इच्छा'' इति अवदत्।

''जगति प्रयत्नानुगुणं फलं सर्वैः प्राप्यते एव। अस्मिन् विषये किमर्थं चिन्ता क्रियते भवता ?'' इति संन्यासी पृष्टवान्।

''भवतः एष विचारः न समीचीनः इति अहं चिन्तयामि। अत्र प्रमाणम् अपि दर्शयामि अहम्। अस्मिन् ग्रामे गर्गः नाम कश्चन महापण्डितः अस्ति। सः सामान्यजीवनं यापयति। किन्तु तस्यैव शिष्यः भार्गवः तु राजास्थाने कार्यं कुर्वन् वैभवेन जीवनं यापयन् अस्ति। जीवनस्य सकला सुखसम्पत् तेन अनुभूयमाना अस्ति'' इति अवदत् माधवः।

''गर्गः राजास्थने उद्योगं प्राप्तुं प्रयत्नं कृतवान् किम् ?'' इति पृष्टवान् संन्यासी।

माधवः उक्तवान् – ''न, ग्रामं त्यक्त्वा अन्यत्र गमनं न इच्छति सः'' इति।

''एवं तर्हि प्रयत्नानुगुणम् एव सर्वैः फलं प्राप्यते इति तु स्पष्टं खलु ?'' इति संन्यासी उक्तवान्।

किन्तु माधवः एतत् अनङ्गीकुर्वन् उक्तवान् – ''श्रीमन्, अस्मिन् जगति मत्सदृशाः अनेके सन्ति, येषां विषये अन्यायः एव अभवत्। समाने प्रयत्ने कृते अपि केचन एव प्रयत्नानुगुणं फलं प्राप्नुवन्ति। ये फलं प्राप्नुवन्ति ते अपि स्वीयं फलम् अन्येभ्यः न यच्छन्ति'' इति।

एतत्सर्वं श्रुतवतः संन्यासिनः मनसि माधवस्य विषये दया उत्पन्ना । अतः सः स्वस्यूतात् एकं पाषाणं निष्कास्य माधवाय दत्त्वा उक्तवान् - ''एतत् एकम् अमूल्यं वज्रम् । अस्य मूल्यं लक्षं रूप्यकाणि स्युः ! अनेन भवतः जीवनं सुखमयं भवतु'' इति ।

माधवः पाषाणं स्वीकृत्य संन्यासिनं प्रणम्य गतः । वर्षानन्तरं पुनः सः संन्यासी माधवं मेलितुम् आगतः । तावति काले माधवस्य जीवने महत् परिवर्तनं दृश्यते स्म । इदानीं सः स्वगृहे वसन् सुन्दर्या पत्न्या सेवकैः च सह सुखेन जीवनं करोति स्म ।

आगतं संन्यासिनं दृष्ट्वा सविनयं नमस्कुर्वन् माधवः उक्तवान् - ''मम एतादृशसुखस्य कारणीभूतः भवानेव । भवतः दयया एव अहं सुखी, सम्पद्युक्तः च'' इति ।

''भवान् सुखी सम्पद्युक्तः च इति तु दर्शनात् एव ज्ञायते । अदृष्टं भवता सह स्नेहेन अस्ति । अस्तु, इदानीं मम काचित् जिज्ञासा यत् धनिकः सन् भवान् स्वस्य भाग्यं केभ्यः विभज्य दत्तवान् ? भवदर्थं ये अत्र कार्यं कुर्वन्तः सन्ति, तेषु कस्मैचित् अपि गृहं क्षेत्रं वा किं दत्तम् ?'' इति संन्यासी पृष्टवान् ।

अनेन वचनेन माधवस्य मुखं विवर्णं जातम् । सः लज्जया उक्तवान् - ''भवता मह्यं लक्षरूप्यकात्मकं वज्रं दत्तम् । जीवनस्य सर्वविधं सुखम् अनुभोक्तुं मम मनः समुत्सुकम् आसीत् । अतः अहं सुखानुभवे मग्नः । मम भाग्येन प्राप्ता सम्पत् मया अनुभूयते । अन्यस्य विषये किमर्थम् अहं चिन्तयेयम् ? तस्य प्रयोजनं किम् ?'' इति

''भवान् महास्वार्थी । यदा भवतः समीपे किमपि न आसीत् तदा भवतः इच्छा आसीत् यत् अन्ये मम विषये चिन्तयेयुः इति । किन्तु भवान् यदा धनिकः अभवत् तदा तु अन्यविषये चिन्तनमपि न इष्टवान् भवान् । अतः भवतः



भाग्यं भवन्तं त्यक्त्वा गच्छतु'' इति अवदत् संन्यासी ।

एतत् श्रुत्वा भीतः माधवः दैन्यस्वरेण उक्तवान् – ''मास्तु स्वामिन् ! एवं मा वदतु । मम एतत् धनधान्यादिकं सर्वं तथैव भवतु । इदानीं वैभवजीवनं त्यक्तुं न शक्यते मया । अतः भवान् एतदर्थं यत् आदिशति तत् करिष्यामि'' इति ।

संन्यासी न अङ्गीकृतवान् । तदा एव कश्चन आभरणवणिक् तत्र आगतः, उक्तवान् च – ''माधव ! भवता दत्तं वज्रमेव न । सः कश्चन पाषाणः । तस्य मूल्यम् एकं नाणकमपि नास्ति । भवतः पाषाणं प्रत्यर्पयामि । मम लक्षं रूप्यकाणि प्रत्यर्पयतु'' इति ।

पश्यतो माधवस्य सर्वा सम्पत्तिः गता । यदा सः एकाकी संवृत्तः तदा संन्यासी तं सान्त्वयन् अवदत् – ''माधव, भाग्यं यदा भवता सह आसीत्, तदा भवता परहितचिन्तनं न कृतम् । तस्य फलम् एव एतत् । यत् प्रवृत्तं तत् भ्रममात्रम् इति चिन्तयतु । प्रवृत्तस्य विषये अलम् अधिकचिन्तनेन । जीवनयापनाय यत् करणीयं तत्र प्रयत्नः भवतु । निष्कपटता भवतु प्रयत्ने । यत् प्राप्यते तेन सन्तृप्यतु'' इति ।

तदा माधवः अञ्जलिं बद्ध्वा अवदत् – ''स्वामिन् ! इदानीं मया विवेकः प्राप्तः अस्ति । मह्यं तत् वज्रं पुनरपि ददातु । तत् प्राप्य अहं विवेकयुक्तेन मार्गेण जीवनं यापयिष्यामि'' इति ।

तत् श्रुत्वा संन्यासी हसन् – ''इदानीमपि भवता वस्तुस्थितिः किं न ज्ञाता ? मम हस्ते स्थितः पाषाणः इच्छानुगुणं मूल्यवान् भवति, मूल्यरहितोऽपि भवति । पूर्वं यदा भवान् तटाकस्य समीपे मिलितवान् तदा क्षेत्रे कार्यं कुर्वन् आसीत् । अतः पाषाणः वज्रतां गतः । किन्तु धनं यदा प्राप्तं तदा भवान् श्रमं परित्यक्तवान् । अतः भवदीयं वज्रं पाषाणः जातः । श्रमः एव सर्वस्य कारणम् । अतः पुनरपि कृषिं कुर्वन् जीवनं यापयतु । भूमौ यः विश्वसिति तस्य भूमिः सफला भविष्यति । भूमिरेव सत्यम् । अन्यत् सर्वं भ्रमरूपमेव'' इति उक्त्वा माधवम् आशिषा अनुगृह्य ततः निर्गतवान् ।



# वेताल-कथा

## महेशस्य महिमा

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एतस्मिन् घोरे अन्धकारे किमर्थं कष्टं सह्यते भवता ? अत्र अपायः यदाकदाचिदपि सम्भवेत् । यदि काऽपि सिद्धिः भवता उद्दिष्टा स्यात् तर्हि अहं वदामि - भवता आश्रितः अयं मार्गः न युक्तः इति । महेशः अपि भवादृशः एव आसीत् । भगवतः वरादिकम् अप्राप्य अपि तेन महिमानः दर्शिताः । किन्तु मन्त्री तम् उद्दिश्य उक्तवान् यत् एषः कश्चन सामान्यः इति । तयोः कथां श्रावयामि भवतः मार्गायासस्य परिहारार्थम् । तां श्रद्धया शृणोतु




तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

महेशः कश्चन साधारणः गृहस्थः । ग्रामे तस्य कीर्तिः आसीत् । तस्य पत्नी अपि उत्तमा एव । एकः पुत्रः एका पुत्री च स्तः तस्य । तस्य पारिवारिकजीवनं सुखमयम् आसीत् ।

कदाचित् सः राजधानीं द्रष्टुं सपरिवारं गतः । मध्येमार्गम् लघूनि द्वित्राणि अरण्यानि प्राप्यन्ते स्म । एतादृशे कस्मिंश्चित् अरण्ये द्वौ व्याघ्रौ आक्रमणं कृतवन्तौ । महेशः तु कथमपि आत्मानं रक्षितुं शक्तवान् । किन्तु व्याघ्रौ तस्य पत्नीं पुत्रौ च मारितवन्तौ एव ।

एतया आकस्मिकघटनया महेशः नितरां चिन्ताग्रस्तः । सः ग्रामं प्रत्यागतः । ग्रामे स्थिता सम्पत्तिः तेन विक्रीता । ग्रामान्तरे वासाय सः मतिं कृतवान् । समीपस्थे ग्रामे सुदर्शनः नाम कश्चित् दूरबन्धुः निवसति स्म । सः महेशाय आश्रयं दत्तवान् । तस्य एकं कारणम् अपि आसीत् ।

सुदर्शनः व्यवहारचतुरः, बुद्धिमान् च । कार्यसाधनाय सः अल्पस्य असत्यस्य कथने सङ्कोचं न अनुभवति स्म । सः चिन्तयति स्म यत् महेशसमीपे प्रभूतं धनम् अस्ति इति । तत् धनं कथमपि वशीकरणीयम् इति तस्य इच्छा । धनप्राप्तेः अनन्तरं महेशः गृहात् निष्कासनीयः इति चिन्तयति स्म सः ।

अल्पे एव काले महेशः तस्मिन् ग्रामे जनप्रियतां प्राप्तवान् । सः जनानां साहाय्यं करोति स्म सर्वदा । जनानां सर्वविधसमस्याः निवारयितुं प्रयतते स्म सः । अतः उत्तमा ख्यातिः प्राप्ता तेन ।

तेषु एव दिनेषु भीमनामकस्य गृहे चौर्यं प्रवृत्तम् । भीमः महता श्रमेण किञ्चित् धनं सम्पादितवान् आसीत् । चोरेण तत्सर्वम् अपहृतम् आसीत् । तस्यैव ग्रामस्य कुसीद-वणिक्तः भीमेन किञ्चित् ऋणं स्वीकृतम् आसीत् । ऋणं शीघ्रं न प्रत्यर्पयिष्यते चेत् बलात् गृहम् एव वशीकरिष्यामि इति भीमम् उक्तवान् कुसीदवणिक् । भीमः एतत्सर्वं महेशम् उक्तवान् ।

सर्वं श्रुत्वा महेशः - ''भवतः ऋण-प्रत्यर्पणे अहं धनसाहाय्यं करिष्यामि । भवतः गृहे यः चौर्यं कृतवान् सः महत् कष्टम् अनुभविष्यति । तस्य हितं न भविष्यति । याभ्यां हस्ताभ्यां सः चौर्यं कृतवान् तौ हस्तौ भग्नौ भविष्यतः । यत् धनं तेन चोरितं तत् तस्य अन्त्यक्रियायै उपयुक्तं भविष्यति'' इति

उक्त्वा भीमाय धनं दत्त्वा तं प्रेषितवान् ।

एतदनन्तरं विचित्रा घटना घटिता । भीमस्य गृहे चौर्यं कृतवान् आसीत् प्रतिवेशी नारायणः एव । रात्रौ सः धेनूनां कृते यदा तृणं यच्छन् आसीत् तदा कश्चन वृषभः शृङ्गाभ्यां तम् अपातयत् । तस्मात् तस्य हस्तौ भग्नौ जातौ । हस्तस्य चिकित्सार्थं गच्छन्तं सुदर्शनः दृष्टवान् । सः तम् अवदत् – ''भोः नारायण ! यः चौर्यं कृतवान् तस्य हस्तौ भग्नौ भवताम् इति अस्माकं महेशः शापं दत्तवान् आसीत् । तस्य वाणी महाशक्तियुता । भवतः भग्नौ हस्तौ दृष्ट्वा अहं निश्चितवान् अस्मि यत् भवान् एव भीमस्य गृहे चौर्यं कृतवान् इति । चोरितं धनं भवान् भीमाय प्रत्यर्पयतु । अन्यथा तत् भवतः अन्त्यक्रियायै उपयुक्तं स्यात्'' इति ।



एतत् श्रुत्वा नारायणः भीतः । सः स्वस्य अपराधम् अङ्गीकृत्य भीमाय धनं प्रत्यर्पितवान् । महेशस्य पादौ गृहीत्वा प्रार्थितवान् यत् कृपया शापः प्रतिस्वीकरणीयः इति ।

''मया शापः दत्तः इति केन उक्तम् ? भीमस्य दुरवस्थां दृष्ट्वा कोपेन मया यत्किञ्चित् उक्तं स्यात् । अतः अलं चिन्तया । भवान् स्वस्य अपराधं स्वयम् अङ्गीकृत्य पश्चात्तापम् अनुभवति यत् तस्मात् अहं सन्तुष्टोऽस्मि । दिनद्वयाभ्यन्तरे भवतः हस्तौ सम्यक् भविष्यतः । निश्चिन्ततया गृहं गच्छतु भवान्'' इति सान्त्वयित्वा नारायणं प्रेषितवान् महेशः ।

आश्चर्यं नाम दिनद्वयाभ्यन्तरे एव नारायणस्य हस्तौ यथापूर्वं जातौ । एतत् दृष्ट्वा सुदर्शनः ग्रामे वार्तां प्रसारितवान् यत् महेशस्य वाणी अमोघशक्तियुक्ता अस्ति, किन्तु महेशः स्वस्य सामर्थ्यं स्वयं न जानाति इति ।

सः एतं विषयं महेशात् गोपितवान् । महेशस्य मुखात् शुभकराणि वाक्यानि एव निर्गच्छन्तु, हानिकराणि मा निर्गच्छन्तु, इत्येतदर्थं सः जनेभ्यः धनस्य सङ्ग्रहणम् आरब्धवान् ।

महेशसमीपं बहवः जनाः आगच्छन्ति स्म । अल्पे एव काले महेशः एतस्य रहस्यं ज्ञातवान् । 'मन्नाम्नः आधारेण सुदर्शनः धनं सङ्गृह्णन् अस्ति' इत्यपि सः ज्ञातवान् । एतस्मात् सः सुदर्शनविषये जुगुप्सां प्राप्तवान् । एतेन सः कमपि अनुक्त्वा रात्रौ सुदर्शनस्य गृहं परित्यज्य गतवान् एव ।

कुत्र गन्तव्यम् इति महेशः न जानाति स्म । समग्रायां रात्रौ तेन प्रयाणं कृतम् । प्रातः महती बुभुक्षा तम् अबाधत । समीपे कुत्रापि

कोऽपि जनः ग्रामः वा तेन न दृष्टः । तदा तस्य मनसि विचारः आगतः – 'यदि कोऽपि मां स्वगृहं नीत्वा उत्तमं भोजनं दद्यात् तर्हि वरं स्यात्' इति ।

तस्मिन् एव समये कश्चन अश्वशकटः तस्य समीपम् आगत्य अतिष्ठत् । शकटे उपविष्टः धनिकः तं स्वगृहं नीत्वा उत्तमं भोजनं दत्तवान् ।

प्रवर्तमानं सर्वं स्वप्नः, उत वस्तुस्थितिः इति तेन न ज्ञातम् । सः धनिकं स्ववृत्तान्तम् उक्तवान् । सर्वं श्रुत्वा धनिकः अवदत् – ''भवति महिमविशेषः स्यात् इति ममापि भाति । गतेभ्यः चतुर्भ्यः वर्षेभ्यः पञ्चदशवर्षीयः मम पुत्रः व्याधिग्रस्तः सन् शय्यायां शेते । तस्य वाक्शक्तिः अपि विलुप्ता अस्ति । तस्य व्याधेः निवारणेन उपकरोतु कृपया'' इति ।

सः धनिकपुत्रस्य शरीरं हस्तेन स्पृशन् अवदत् – ''पक्षाभ्यन्तरे भवतः पुत्रः वक्तुं समर्थः क्रीडितुं समर्थः च भविष्यति । अतः अलं चिन्तया'' इति ।

एतस्याः घटनायाः अनन्तरं चतुर्थे दिने नगरतः कश्चन वैद्यः आगतवान् । सः धनिकं दृष्ट्वा अवदत् – ''भवतः पुत्रस्य अस्वास्थ्यस्य विषये अहं श्रुतवान् अस्मि । एतस्य यः रोगः तस्य निवारणार्थम् अपेक्षितां चिकित्साम् अहं जानामि । दशदिनाभ्यन्तरे एतं व्याधिविमुखं करिष्यामि'' इति ।

वैद्यस्य वचनम् अवितथं जातम् । दशदिनाभ्यन्तरे सः स्वस्थः जातः । एतस्मात् महेशस्य कीर्तिः पुनरपि प्रवृद्धा । सर्वे निश्चितवन्तः यत् महेशस्य वाण्यां विशेषशक्तिः अस्ति इति । महेशः अपि एतस्मिन् वचने विश्वसितवान् ।

कदाचित् महेशः नदीतटं गतवान् । तत्र एका निर्धनमहिला वस्त्रं क्षालयन्ती आसीत् । दशवर्षीयः तस्याः पुत्रः शिलाखण्डान् क्षिपन्



क्रीडन् आसीत् । तेन क्षिप्तः एकः शिलाखण्डः महेशस्य शिरसि लग्नः । वेदनाम् असहमानः महेशः उच्चैः आक्रन्दनम् अकरोत् । एतस्मात् भीतः सः बालः पृष्ठतः पदानि स्थापयन् नद्यां पतितः । माता जानाति स्म यत् बालः तरणं न जानाति इति । सा महेशसमीपम् आगत्य - ''महेशवर्य ! भवतः शापस्य कारणतः मम पुत्रः नद्यां पतितः । सः तरणं न जानाति । इदानीं तं रक्षितुं भवान् एव समर्थः'' इति अवदत् ।



महेशः तां सान्त्वयन् - ''अम्ब ! अलं चिन्तया ! भवत्याः पुत्रस्य किमपि न भविष्यति । सः तीरं प्राप्स्यति'' इति ।

यावत् महेशस्य वचनं न समाप्तं तावता बालकः कथमपि तरन् तीरं प्राप्तवान् एव । तदा सा निर्धनमहिला महेशस्य पादौ गृहीत्वा - ''आर्य ! भवान् साधारणः मानवः न । मम गृहे सुवर्णवृष्टिः यथा स्यात् तथा वरेण अनुगृह्णातु'' इति प्रार्थितवती ।

''अम्ब ! यत् अस्मद्वशं नास्ति तत् न प्रार्थनीयम् । धनं विद्या च प्रयत्नेन प्राप्येते, न तु वरेण'' इति उक्त्वा महेशः ततः निर्गतवान् ।

तस्मिन् एव समये तस्य देशस्य राजा तत्र आगतः । सः वेषान्तरं धृत्वा देशे सञ्चरति स्म । सः प्रवृत्तं सर्वं दृष्टवान्, सम्भाषणं च श्रुतवान् आसीत् । ततः सः महेशविषये विवरणं सङ्गृहीतवान् । राजधानीं प्रतिगतः सः महेशम् आनाय्य मन्त्रिणः पुरतः तस्य परिचयं, शक्तिसामर्थ्यादिकं च उक्त्वा अपृच्छत् - ''एतस्य वाक्शक्तेः आधारेण अहम् आस्थानस्य सर्वान् सर्वसमर्थान् कर्तुम् इच्छामि । ततः शत्रुराजान् सर्वान् जेष्यामि । एतद्विषये भवतः आशयः कः ?'' इति ।

तदा मन्त्री अवदत् - ''महाराज ! महेशस्य शक्तौ वैशिष्ट्यं किमपि नास्ति । भीमस्य गृहे जातं चौर्यं दृष्ट्वा सः सहानुभूतिं दर्शयन् उक्तवान् यत् चोरस्य हस्तौ भग्नौ भवेताम् इति । काकतालीयन्यायेन नारायणस्य हस्तौ भग्नौ । बुभुक्षितः सः आहारम् इष्टवान् । काकतालीयन्यायेन एव कश्चन धनिकः तस्मै आहारं दत्तवान् । रोगग्रस्तः बालः स्वस्थः भवतु इति यदा सः इच्छां प्रकटितवान् तदा अपि काकतालीयन्यायेन कश्चन वैद्यः आगत्य बालस्य रोगम् उपशमितवान् । एवं सर्वं काकतालीयम् एव । एतासु घटनासु एतस्य वाण्याः सामर्थ्यातिशयः कोऽपि नास्ति'' इति ।

मन्त्रिणः वचनं श्रुत्वा क्षणकालं विचिन्त्य

राजा अवदत् – ''महेशस्य साहाय्यं वयं स्वीकुर्याम चेत् का हानिः ? यदि लाभः स्यात् तर्हि वरम् ! यदि लाभः न स्यात् तर्हि हानिः तु न'' इति ।

तत् श्रुत्वा मन्त्री अवदत् – ''महाप्रभो ! महेशस्य वचनैः यदि अस्माकं कोऽपि लाभः न भवेत् तर्हि अस्माकम् उपहासपात्रता स्यात् । अन्धविश्वासे श्रद्धाप्रदर्शनं मूर्खाणां लक्षणम् । भवता ग्रामे सर्वाणि विवरणानि सङ्गृहीतानि सन्ति एव । मम वचनानि शक्तियुतानि इति यदि महेशः भावयति तर्हि निश्चितं यत् तत्सदृशः मूर्खः अन्यः नास्ति इति । तस्य परिवारः कथं दिवं गतः इति भवता ज्ञायते खलु ?'' इति ।

मन्त्रिणः वचनं श्रुत्वा आश्चर्यचकितः राजा – ''भवता योग्येन क्रमेण विषयः स्मारितः'' इति उक्त्वा मन्त्रिणः प्रशंसां कृतवान् । महेशं च सत्कृत्य तदीयं ग्रामं प्रति प्रेषितवान् ।

वेतालः एवं कथां समाप्य अवदत् – ''महेशस्य महिमा अस्ति वा न वा इति तु न स्पष्टम् । किन्तु तस्य वाणी शक्तियुता इत्यत्र सन्ति एव प्रमाणानि बहूनि । किं ताः सर्वाः घटनाः काकतालीयाः ? महेशः सज्जनः । सः कस्यापि अहितं न करोति । एतादृशं तम् अज्ञानिनम् उक्तवान् मन्त्री । किमर्थं तेन तथा उक्तम् ? किं महेशः अज्ञानी ? मन्त्रिणः वचने विश्वसन् राजा किं मूर्खः न ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा राजा त्रिविक्रमः अवदत् – ''महेशः पत्नीपुत्रान् बहुधा इच्छति स्म । किन्तु सः व्याघ्राभ्यां तान् रक्षितुं न शक्तवान् । एतस्मात् स्पष्टं यत् तस्य कोऽपि महिमा नास्ति इति । यदि स्यात् तर्हि तद्बलात् सः पत्नीपुत्रान् अरक्षिष्यत् । मन्त्री एतम् एव विषयं राजानं सूचितवान् । तर्कबद्धस्य एतस्य वचनस्य तात्पर्यम् अवगतवान् राजा महेशम् आस्थाने स्थिरतया अनियुञ्जन् सत्कारमात्रं कृत्वा प्रेषितवान् । महेशस्य जीवने काकतालीय-घटनाः आधिक्येन प्रवृत्ताः । एतादृश्यः घटनाः लोके कादाचित्कतया एवं सम्भवन्ति, न तु सर्वदा'' इति ।

एवं त्रिविक्रमस्य मौनभङ्गं साधितवान् वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# राजकुमार्याः परीक्षा



अरण्येन आवृतस्य सरोवरस्य प्रशान्तः कश्चन परिसरः । राजा शर्यातिः राज्ञ्या सह तस्य सरोवरस्य तीरे उपविश्य प्रकृतिसौन्दर्यस्य आस्वादनं करोति स्म । तयोः पुत्री सुकन्या पुष्पाणां चयनार्थं वृक्षात् वृक्षं प्रति गच्छन्ती पतङ्गः इव व्यवहरति स्म । अरण्यं प्रति आगमनाय सा पुनः पुनः अवकाशं न प्राप्नोति स्म । अतः इदानीं तम् अवसरं प्राप्य नितरां सन्तुष्टा आसीत् सा । सा सखीभिः पृथग्भूय मयूरान् हरिणान् च अनुसृत्य इतस्ततः धावति स्म ।

एवं व्यवहरन्ती सा अरण्यस्य मध्यभागं प्रविष्टवती । तत्र तया अत्युन्नताः वृक्षाः जलपाताः च दृष्टाः । ताम् एव अन्विष्य आगतानां सखीनां स्वरः अपि दूरात् श्रुतः - ''राजकुमारि ! कुत्रास्ति भवती ?'' इति । अन्धकारप्रसारस्य आरम्भः जातः आसीत् । मातापित्रोः समीपं गमनाय कालः सम्प्राप्तः आसीत् । अतः सा सरोवरदिशि पदानि स्थापितवती ।

एवं प्रतिगच्छन्त्या तया एकं चित्ताकर्षकम् अपूर्वं दृश्यं दृष्टम् । वल्मीकस्य मध्ये कान्त्या वज्रम् इव प्रकाशमानं गोलकद्वयं तया दृष्टम् । 'किम् एतत् ?' इति कुतूहलेन परीक्षितवती राजकुमारी । तथापि तत् युगलं किम् इति न ज्ञातम् । अतः सा वृक्षतः लघुशाखां चित्वा शाखाशलाकया तदुभयं विद्धवती ।

अनन्तरक्षणे एव तया कश्चन चीत्कारः श्रुतः । एषः चीत्कारः कुतः आगतः इति तया न ज्ञातम् । आश्चर्येण भीत्या च स्तब्धा क्षणकालं सा तत्रैव मौनेन स्थितवती । ततः भीत्या सरोवरं प्रति धावितवती च ।

तस्मिन् एव काले सरोवरस्य अपरपार्श्वे स्थिताः अङ्गरक्षकाः केनचित् व्याधिना ग्रस्ताः अभवन् । ते चलितुम् असमर्थाः जाताः । दूरदर्शी राजा अवगतवान् यत् कस्यचित् शापः एव एतस्य कारणम् इति । 'कस्य शापः स्यात् एषः ? किमर्थं वा एषः शापः आगतः' इति न ज्ञातवान् राजा ।

कारणम् अन्वेष्टुम् उद्युक्तः राजा इतस्ततः



सञ्चरन् वल्मीकसमीपम् आगतवान् । वल्मीकात् आगच्छत् अस्पष्टक्रन्दनं सः श्रुतवान् । कश्चन संन्यासी दीर्घकालात् तपसि लीनः आसीत् । तत्कारणतः तं परितः वल्मीकः उद्भूतः आसीत् । एतत्सर्वम् अवगतं राज्ञा ।

राजा जागरूकतया वल्मीकमृत्तिकाम् अपनीतवान् । तदा कश्चन संन्यासी दृष्टिगोचरः जातः । राजकुमारी विचित्रवस्तुभावनया तस्यैव संन्यासिनः नेत्रे विद्धवती आसीत् । एतस्मात् सः संन्यासी अन्धः जातः आसीत् । तस्मात् कारणात् एव राज्ञः अङ्गरक्षकाः चलनासमर्थाः जाताः आसन् ।

सः संन्यासी कश्चन महात्मा । तस्य नाम आसीत् च्यवनः इति । राजा राज्ञी च तं साष्टाङ्गं प्रणम्य प्रार्थितवन्तौ यत् शापः प्रतिस्वीकरणीयः इति तदा संन्यासी अवदत् यत् यः अपराधं करोति सः प्रायश्चित्तं करोति चेत् शापः स्वयम् एव अपगमिष्यति इति ।

तदा राजा संन्यासिनं निवेदितवान् - ''भवान् अस्माकं प्रासादम् आगच्छतु । तत्र प्रायश्चित्तरूपेण यद्यत् करणीयं तत्सर्वं करिष्यते'' इति ।

एतत् निराकुर्वन् संन्यासी अवदत् - ''प्रायश्चित्तं तेनैव करणीयं, येन च अपराधः कृतः । राजकुमारी माम् अन्धं कृतवती इत्यतः सा मां परिणीय मम सेवां कुर्यात् । आन्ध्यकारणतः अहम् इदानीम् अन्यसाहाय्यापेक्षी अस्मि । तया मम साहाय्यं करणीयम्'' इति ।

एतत् श्रुत्वा राजा राज्ञी च चिन्ताक्रान्तौ । या कश्चित् राजाकुमारं परिणीय पट्टमहिषीत्वं प्राप्तुम् अर्हा सा कथं वा वृद्धं कञ्चित् संन्यासिनं परिणीय वन्यजीवनं यापयेत्' इति अचिन्तयतां तौ । किन्तु तावता राजाकुमारी एव अग्रे आगत्य पितरम् अवदत् - ''तात ! परिसरे मम विशेषप्रीतिः । कुटीरे वासः करणीयः इति काचित् इच्छा मम अन्तरङ्गे बहोः कालात् गुप्ततया स्थिता आसीत् । ताम् इच्छां पूरयितुम् एव एतत्सर्वं प्रवृत्तं प्रायः । अतः अहम् एतं महात्मानम् एव परिणीय एतस्य सेवां करिष्यामि । अतः अनुज्ञा दातव्या कृपया'' इति ।

एतदवसरे अङ्गरक्षकाः यथापूर्वं चलनादिसमर्थाः जाताः । पुत्र्याः अपेक्षायाः अङ्गीकारात् ऋते राजराज्ञयोः अन्यः मार्गः न आसीत् । ततः च्यवन-सुकन्ययोः विवाहः प्रवृत्तः । सुकन्या वैभवजीवनं परित्यक्तवती । आभरणादीनि अपनीय वल्कलं धृत्वा कुटीरे वासम् आरब्धवती । पूर्वं प्रासादे तस्याः सेवार्थं दशाधिकाः सख्यः सदा सिद्धाः भवन्ति स्म । इदानीं कुटीरे एकाकिन्या तया मुनेः सेवा करणीया अभवत् ।

कदाचित् सा सरोवरे स्नानं समाप्य यदा प्रत्यागच्छन्ती आसीत् तदा उभौ सुन्दरौ तरुणौ तस्याः पुरतः प्रत्यक्षौ जातौ । तौ समानाकारकौ परमसौन्दर्योपेतौ च आस्ताम् । तौ तां प्रशंसन्तौ

उक्तवन्तौ – "हे परमसुन्दरि ! भवती कञ्चित् वृद्धं संन्यासिनं परिणीय सुन्दरं तारुण्यं व्यर्थी-कुर्वती अस्ति यत् तदर्थम् आवां विषीदावः । आवाम् अश्विनीकुमारौ । देववैद्यौ आवाम् । आवयोः अन्यतरं परिणीय सुखमयं जीवनं यापयतु । सुखं च अनुभवतु । किम् एतेन कष्टमयेन निस्सारजीवनेन ?" इति ।

एतत् श्रुत्वा सुकन्या नितरां क्रुद्धा जाता । सा तौ भायितवती यत् मया शापः दीयते अधुना इति । तस्मात् भीतौ तौ क्षमां प्रार्थितवन्तौ – "आवां यत् औद्धत्यं प्रदर्शितवन्तौ तस्य निमित्तम् भवत्याः पतिं सुन्दरं तरुणं करिष्यावः । सः दृष्टिशक्तिम् अपि प्राप्स्यति । एतदर्थं सः एतस्मिन् सरोवरे आवाभ्यां सह सकृत् निमज्जनं कुर्यात् । जलात् बहिः आगमनस्य अनन्तरं काचित् परीक्षा भविष्यति । किं तां सम्मुखीकर्तुं भवती सिद्धा ?" इति पृष्टवन्तौ तौ ।

मम पत्युः आन्ध्यस्य कारणम् अहम् एव इत्येषः भावः सुकन्यां सदा बाधते स्म । अतः यदा अश्विनीकुमारौ दृष्टिदानप्रस्तावम् उप-स्थापितवन्तौ तदा सा सहर्षम् अङ्गीकारं दर्शयितुम् उद्युक्ता । तावता तया स्मृतं यत् एतद्विषये पत्युः सम्मतिः प्राप्तव्या इति । अतः सा कुटीरं प्रत्यागत्य पतिं प्रवृत्तं सर्वं निवेदित-वती ।

"सरोवरात् बहिः आगमनस्य अनन्तरं कीदृशी परीक्षा सम्मुखीकरणीया भवेत् इति तु न ज्ञायते । तथापि अधैर्यं न श्रेयसे । अतः भवती परीक्षासम्मुखीकरणम् अङ्गीकरोतु" इति वदन् च्यवनः स्वस्य अनुज्ञां दत्तवान् ।

ततः सर्वे सरोवरतीरं गताः । "यदा वयं जलात् बहिः आगमिष्यामः तदा भवत्या पत्युः एव हस्तं गृहीत्वा अग्रे गन्तव्यम्" इति सुकन्याम् उक्तवन्तौ अश्विनीकुमारौ ।

ततः त्रयः अपि युगपत् एव जले निमज्जनं कृतवन्तौ । ततः बहिः आगमनसमये त्रयः अपि समानाकारकाः एव आसन् । तेषु च्यवनः कः इति अभिज्ञानं नितरां कष्टसाध्यम् आसीत् सुकन्यायाः ।

सुकन्या तु सामान्या महिला न । सा अश्विनीकुमारयोः क्रीडायाः रहस्यं ज्ञातवती । अतः नेत्रे निमील्य मातरं ध्यात्वा पातिव्रत्यबलेन पतिम् अभिज्ञाय अग्रे गत्वा तेषु अन्यतमस्य हस्तं गृहीतवती । यस्य हस्तं सा गृहीतवती सः च्यवनः एव आसीत् ।

ततः सुकन्या पत्या सह आध्यात्मिकजीवनं यापयन्ती सुखेन जीवितवती ।





# मन्दहासात् सौन्दर्यम्

श्रीपुरे श्रीधरः नाम कश्चन धनिकः निवसति स्म । तस्य अपारा सम्पत्तिः आसीत् । तथापि काचित् चिन्ता तं बाधते स्म । चिन्ताविषयः आसीत् – कुरूपिता । स्वस्य कुरूपं स्मरन् सः सदा चिन्ताक्रान्तः भवति स्म ।

सः विविधानि औषधानि सेवितवान् । यः यः यं यम् उपायं वदति स्म तं तं सः अनुसृतवान् । तथापि तेन सुरूपं न प्राप्तम् ।

कदाचित् कश्चन संन्यासी श्रीपुरम् आगतः । श्रीधरः तस्य समीपं गत्वा तं स्वस्य समस्यां निवेदितवान् । तदा संन्यासी अवदत् – ''वत्स ! रूपं तु भगवता दत्तम् । तस्य परिवर्तनार्थं प्रयासः व्यर्थः । भगवतः कृपया भवता अपारा सम्पत्तिः प्राप्ता अस्ति । योग्येन मार्गेण तस्याः उपयोगं करोतु । एतस्मात् सर्वे भवन्तम् आदरेण पश्यन्ति'' इति ।

श्रीधरः सम्पत्तेः व्ययं न इच्छति स्म । अतः सः अवदत् – ''अन्यं कमपि उपायं वदतु कृपया'' इति ।

संन्यासी क्षणकालं विचिन्त्य अवदत् – ''हरिपुरे मन्दारः नाम कश्चन युवकः अस्ति । भवतः यत् रूपं ततोऽपि कुरूपं तस्य । तेन सह यदि भवान् कानिचन दिनानि वसेत् तर्हि भवतः मनसि विचारः भवेत् यत् मन्दारस्य रूपात् मम रूपम् एव श्रेष्ठम् इति । काऽपि रेखा ह्रस्वीकरणीया चेत् तस्याः पार्श्वे अपरा दीर्घा रेखा लेखनीया । एतस्मात् पूर्वतनरेखा ह्रस्वा भविष्यति एव'' इति ।

श्रीधराय एषा सूचना अरोचत । अल्पं धनं स्वीकृत्य सः हरिपुरं गतवान्, मन्दारेण मिलितवान् च । मन्दारस्य रूपं वस्तुतः अपि असुन्दरम् आसीत् । एतस्य दर्शनात् श्रीधरेण

कश्चन आनन्दः प्राप्तः ।

मन्दारः यद्यपि निर्धनः, तथापि परिश्रमेण कार्यं करोति स्म । ततः यावत् धनं लभ्यते तेन उदरं पूरयति स्म । श्रीधरः तम् अवदत् - ''मम गृहम् आगत्य कानिचन दिनानि वसतु । वस्त्रभोजनादीनि सर्वविधानि सुख-सौभाग्यानि प्राप्स्यन्ते तत्र'' इति ।

किन्तु मन्दारः श्रीधरस्य प्रस्तावं निराकुर्वन् उक्तवान् - ''ग्रामस्य सर्वे जनाः मां बहुधा इच्छन्ति । अहम् अत्र सन्तोषेण अस्मि । अतः एतस्य ग्रामस्य त्यागस्य विचारः न क्रियते मया'' इति ।

तत् श्रुत्वा श्रीधरः अचिन्तयत् - 'अपार-सम्पत्तौ सत्याम् अपि अहम् असन्तुष्टः अस्मि, एषः च सन्तुष्टः अस्ति । एषः वदति यत् ग्रामस्य सर्वे जनाः माम् इच्छन्ति इति । निर्धनम् एतं जनाः कथं वा इच्छेयुः ?' इति । स्वस्य सन्देहस्य निवारणार्थं सः ग्रामीणान् मन्दार-विषये पृष्टवान् । तदा केचन 'सः परोपकारी' इति, पुनः केचन 'सः महा-सज्जनः' इति, अपरे केचन 'सः निस्स्वार्थी' इति च उक्तवन्तः । तेषु कोऽपि तस्य कुरूपविषये किमपि न उक्तवान् एव ।

अतः श्रीधरः कञ्चित् मन्दारस्य कुरूप-विषये पृष्टवान् । तदा सः अवदत् - ''यदा अहं मन्दारं पश्यामि तदा तदीयाः सद्गुणाः एव मम नेत्रयोः पुरतः आयान्ति । तस्य रूपविषये मया न चिन्त्यते एव'' इति ।

श्रीधरेण ज्ञातं यत् सुगुणानामिका तरुणी मन्दारे विशेषानुरक्ता अस्ति इति । सा क्षीरविक्रयणेन जीविकां यापयति स्म । तस्याः



सौन्दर्यम् अनुपमम् आसीत् । सकृत् दृष्टवान् कश्चित् तां पुनः पुनः पश्येत् एव ।

सा द्रष्टव्या इति इच्छा उत्पन्ना श्रीधरस्य मनसि । अतः सः ताम् अन्विष्य गतवान् । ग्रामे क्वचित् तेन सा दृष्टा । तां दृष्ट्वा श्रीधरः आश्चर्यातिरेकेण मूर्च्छां प्राप्य पतितवान् ।

सुगुणा जलसेचनेन तं सचेतनं कृतवती । ततः सा तं पृष्टवती - ''भवान् कथं मूर्च्छां गतः ? किम् अभवत् भवतः ?'' इति ।

''भवत्याः सौन्दर्यम् एव अत्र कारणम् । दर्शनमात्रेण सौन्दर्येण वशीकृतः अहं भवतीं परिणेतुम् इच्छामि । अहं महाधनिकः । मम परिणयेन भवती सुखेन जीवनं यापयितुम् अर्हति'' इति अवदत् श्रीधरः ।

''अहं मन्दारे अनुरक्ता अस्मि । तमेव अहं परिणेष्यामि'' इति अवदत् सुगुणा ।

"मन्दारः मत्तोऽपि सुन्दरः तु न । मम यावती सम्पत्तिः तस्याः शतांशः अपि नास्ति तस्य । एवं स्थिते अपि तस्मिन् अनुरागः किमर्थम् ?" इति पृष्टवान् श्रीधरः ।

"भवान् किं जानाति तस्य वैशिष्ट्यम् ? सः सर्वदा स्मितवदनः । यदा तस्य मुखे मन्दहासः भवति तदा तदीयस्य मुखस्य सौन्दर्यं तावत् वर्णनातीतम्" इति उक्तवती सुगुणा ।

श्रीधरः अपि हसितुम् इच्छति स्म । किन्तु तस्य मुखात् हासः न निर्गच्छति स्म । अतः सः मन्दारसमीपं गत्वा उक्तवान् यत् हासं मां पाठयतु इति ।

तदा मन्दारः अवदत् - "स्वविषये न्यूनचिन्तनं कृत्वा अन्येषां विषये अधिकं चिन्तनं करोतु । स्वविषये चिन्तनात् अल्पः आनन्दः प्राप्येत । अन्येषां हितस्य चिन्तनेन जीवने सन्तोषस्य पूरः एव भवेत्" इति ।

तदा श्रीधरः अवदत् यत् अन्येषां हितस्य चिन्तनं मया सर्वथा न शक्यते इति ।

तत् श्रुत्वा मन्दारः अवदत् - "ग्रामस्य सीमायां नित्यानन्दः नाम संन्यासी निवसति । सः भवन्तं तादृशीः कथाः श्रावयति यासां श्रवणात् भवान् उदरोपपीडं हसिष्यति । ततः हासस्य अभ्यासः भवेत्" इति ।

श्रीधरः नित्यानन्दसमीपं गतः । नित्यानन्दः कथाः श्रावितवान् । कथाकथनसमये सः तदा तदा हसति स्म अपि ।

"कथां कथयन् भवान् स्वयं किमर्थं हसति ?" इति आश्चर्येण पृष्टवान् श्रीधरः ।

तदा नित्यानन्दस्वामी अवदत् - "अहं मम कथां श्रुत्वा न हसामि । कथाकथनसमये भवतः उदरं तु कम्पते स्म । किन्तु मुखे हासस्य च्छाया अपि न दृश्यते स्म । एतत् दृष्ट्वा हसितं मया" इति ।

"वस्तुतः मया हसितम् एव । अतः एव मम उदरं कम्पते स्म" इति उक्तवान् श्रीधरः ।

"एवम् ! हासः कृतः चेदपि मुखे हासच्छाया तु न दृष्टा ! भवतः मनसि प्रायः स्वार्थविचाराः एव सन्ति । अतः हासच्छाया न दृष्टा" इति उक्तवान् नित्यानन्दः ।

इदानीं वस्तुस्थितिं ज्ञातवान् श्रीधरः स्वग्रामं प्रत्यागत्य परोपकारकार्याणि आरब्धवान् । एतदनन्तरं कुरूपं कदापि तस्य खेदाय न अभवत् ।



# भारतम् अवगम्यताम्

देशस्य अतीतं वर्तमानं च अवगन्तुम् अगस्ट्मासः सुयोग्यः कालः । अधोनिर्दिष्टाः प्रश्नाः भवतां कुतूहलस्य अभिवर्धकाः सन्ति ।

१. स्वतन्त्रभारतस्य प्रथमम् आयव्ययपत्रं कः उपस्थापितवान् ?

२. भारतस्य कस्य राष्ट्राध्यक्षस्य अधिकारावधिः अल्पकालिकः आसीत् ?

३. मतदानार्हता २१ वर्षीयाणां या आसीत् सा अष्टादशवर्षीयाणाम् अपि भवितुम् अर्हति इति कदा निर्णीतम् ?

४. 'जय जवान् जय किसान्' इत्यनेन सः 'जय विज्ञान' इति केन योजितम् ?

५. लोकसभायाम् अविश्वासनिर्णयप्रस्तावं पारयितुं कति सदस्याः अवश्यं भवेयुः इति नियमः अस्ति ?

६. राज्यसभायाम् उपराष्ट्रपतिः सभापतिस्थानम् अलङ्करोति । तस्य अभावे कः तत् पदम् अलङ्कर्तुम् अर्हति ?

७. प्रादेशिकभाषाधारेण आरचितं प्रथमं राज्यं किम् ?

८. मलयालभाषिबहुलः कश्चन प्रदेशः केरलराज्ये नास्ति । तस्य नाम किम् ? स च प्रदेशः कस्य राज्यस्य अधीनः अस्ति ?

९. गोमटेश्वरस्य अपूर्वा मूर्तिः द्रष्टव्या चेत् किं राज्यं प्रति गन्तव्यम् ?

१०. लघुतमः केन्द्रशासितप्रदेशः कः ?

११. भारतस्य प्रथमः कृषिविश्वविद्यालयः कः ?

१२. प्राचीनायाः राष्ट्रियपादकन्दुकस्पर्धायाः नाम किम् आसीत् ?

१३. अण्डमान्-निकोबार्द्वीपसमूहस्य नूतनं नाम निश्चितवान् आसीत् सुभाश्चन्द्रबोसः । तत् नाम किम् ?

१४. यदा बङ्गालराज्यं विभक्तं तदा कः वैसरायपदे आसीत् ?

*(उत्तराणि अग्रिमे मासे)*

### *'जुलै'मासस्य प्रश्नानाम् उत्तराणि*

*१. गोदावरी ।*
*२. शिम्ला ।*
*३. शिम्ला ।*
*४. वटः ।*
*५. तृणम् ।*
*६. वर्णसंयोजनप्रकारः ।*
*७. जमशेड्पुरम् ।*



# मानवसेवा एव माधवसेवा

राजवरनामके ग्रामे लिङ्गेश्वरः नाम कश्चन निवसति स्म । तस्य पत्न्याः नाम पार्वती इति । तौ अनपत्यौ । लिङ्गेश्वरः सर्वविधरोगाणां चिकित्सायां समर्थः आसीत् । जनाः प्रीत्या यावत् यच्छन्ति तावत् एव स्वीकरोति स्म सः । तेनैव धनेन तृप्त्या जीवनं यापयन्ति स्म । एवम् एव दिनानि गतानि ।

तस्य पत्नी अनपत्यताकारणतः महत् दुःखम् अनुभवति स्म । तया अपूजितः देवः प्रायः कोऽपि न आसीत् । तया अकृतं व्रतम् अपि न स्यात् । तथापि तया सन्तानः न प्राप्तः आसीत् । एकदा सा पतिम् उक्तवती - ''भवतः वैद्यशास्त्रं मद्विलषये किमर्थं कुपितः इति मया न ज्ञायते । अन्तर्वेदक्षेत्रनामकं प्रसिद्धं क्षेत्रं किञ्चन अस्ति इति श्रूयते । तत्रत्ये सन्तानमण्डपे रात्रिं यावत् यः शेते सः यदि स्वप्ने फलपुष्पादीनि पश्यति तर्हि सन्तानं प्राप्स्यति इति ख्यातिः अस्ति । अतः आवाम् अन्तर्वेदक्षेत्रं प्रति गत्वा आगच्छाव'' इति ।

एतत् श्रुत्वा क्षणकालं विचिन्त्य लिङ्गेश्वरः पत्नीम् अवदत् - ''अन्तर्वेदस्वामी लक्ष्मीनरसिंहः एव । किन्तु देवः वा किं कुर्यात् यत् ललाटे लिखितं तदेव खलु सम्भवेत् ? तथापि भगवतः दर्शनात् पुण्यं तु प्राप्येत एव । अतः आवां तत्र गत्वा आगच्छाव तावत्'' इति ।

लिङ्गेश्वरः पत्न्याः वचनं यद्यपि अङ्गीकृतवान् तथापि अन्तर्वेदक्षेत्रं बहुदूरे अस्ति इति ज्ञात्वा सः चिन्ताक्रान्तः जातः । अन्तर्वेदक्षेत्रं प्राप्तुं सुदूरं यावत् पादाभ्यां प्रयाणं करणीयं, पुनः नौकया अपि गन्तव्यं भवति स्म । एतदर्थं धनम् आवश्यकम् एव खलु । अद्यावधि यत् सम्पादितं तत्सर्वम् एतस्याः यात्रायाः निमित्तम् एव आवश्यकं भवेत् ।

सर्वं पत्नीम् उक्त्वा लिङ्गेश्वरः अवदत् - ''सम्यक् विचिन्त्य भवती निर्णयं करोतु ।

भवती यथा वदति तथा भवतु'' इति ।

पार्वती दीर्घकालं विचिन्त्य अवदत् - ''धनाभावः खलु अस्माकं समस्या । एतदर्थं गमनात् पूर्वं गृहे सत्यनारायणपूजां व्यवस्थाप्य ग्रामीणान् सर्वान् निमन्त्रयाम । आगतेषु केचन वा भवत्तः चिकित्सां प्राप्तवन्तः भवेयुः एव । सर्वेषां पुरतः अन्तर्वेदयात्राप्रस्तावम् उपस्थापयाम । तदा केचन वा उपायनरूपेण यत्किञ्चित् धनं दद्युः । एतस्मात् अस्माकम् धनाभावसमस्या परिहृता भवेत् । एषः वञ्चनामार्गः तु न । एतं मार्गं बहवः अनुसरन्ति एव'' इति ।

पत्न्याः सूचनायाः अनुगुणं लिङ्गेश्वरः सत्यनारायणपूजायाः दिनं निश्चित्य ग्रामस्य सर्वान् जनान् निमन्त्रितवान् । जनाः लिङ्गेश्वरस्य स्वभावं जानान्ति स्म । 'सः स्वार्थपरः सर्वथा न' इति जानन्तः ते उदारतया एव उपायनरूपेण धनं दत्तवन्तः ।

स्वसमीपे यत् धनम् आसीत्, उपायनरूपेण यत् धनं प्राप्तं तयोः गणनां कृत्वा लिङ्गेश्वरः चिन्तितवान् यत् एतावता धनेन उभयोः दरिद्रकुटुम्बयोः निमित्तं गृहं निर्मातुं शक्यते इति ।

सः स्वस्य चिन्तनं पत्नीं निवेद्य अवदत् - ''एतावत् उपायनं यत् प्राप्तं तत् मयि स्थितस्य आदरस्य गकारणतः, उत भगवतः कृपया इति तु मया न ज्ञायते । सर्वं भगवतः लीला'' इति ।

पार्वती प्रत्युत्तरं न उक्तवती । ततः दिनद्वयाभ्यन्तरे तस्मिन् ग्रामे दिनत्रयं यावत् निरन्तरवृष्टिः जाता । एतस्मात् समग्रः ग्रामः एव जलावृतः जातः । चतुर्थे दिने सूर्यकिरणाः दृष्टाः जनैः ।

वृष्टिः यदा स्थगिता तदा अन्ये इव लिङ्गेश्वरः पार्वती च ग्रहात् बहिः आगत्य ग्रामस्य परिस्थितिं दृष्टवन्तौ । तयोः गृहस्य



पुरतः कर्मकरः लक्ष्मणः पत्न्या पुत्रैः च सह आर्द्रशरीरः सन् कम्पमानः वृक्षस्य अधः स्थितवान् आसीत् । दिनत्रयं यावत् जातायाः वृष्टेः कारणतः तदीयं कुटीरं विनष्टं जातम् आसीत् ।

लक्ष्मणस्य शोचनीयां दशां दृष्टवतः लिङ्गेश्वरस्य हृदये करुणा उत्पन्ना । सः लक्ष्मणपरिवारं स्वगृहं प्रति निमन्त्रितवान् । धरणाय शुष्कवस्त्रं दत्तवान् । पार्वती त्वरया तेषां कृते पाकं सज्जीकृत्य प्रीत्या भोजितवती । दिनत्रयं यावत् तैः अनुभूतं कष्टं श्रुत्वा अनुतापं प्रदर्शितवती । विनष्टस्य गृहस्य पुनर्निर्माणं सुकरं तु न आसीत् लक्ष्मणस्य ।

अतः पार्वती पतिम् उक्तवती – ''लक्ष्मणस्य पुत्राणां दुरवस्थाम् अहं द्रष्टुं न शक्नोमि । सन्तार्थम् अहम् अन्तर्वेदवासिनः लक्ष्मीनरसिंहस्य दर्शनं कर्तुम् इच्छामि स्म । दीनस्थितौ स्थितान् बालान् एवम् एव परित्यज्य यदि अहम् अन्तर्वेदक्षेत्रं गच्छेयं तर्हि किं भगवान् मयि सन्तुस्टः भवेत् ? सन्तान-प्राप्तीच्छया वयं भगवद्दर्शनार्थं गच्छामः । किन्तु तस्मात् सन्तानः भवेत् उत न इति तु केनापि न ज्ञायते । अतः लक्ष्मणाय कुटीरनिर्माणम् एव वरम् इति भाति मम । तेन धनस्य सदुपयोगः भविष्यति'' इति ।

पत्न्याः एतानि वचनानि श्रुत्वा लिङ्गेश्वरः नितरां सन्तुष्टः । सः एव गृहसमीपे एव लक्ष्मणाय उत्तमं कुटीरं निर्मापितवान् । कुटीर-प्रवेशसमये लक्ष्मणगृहीयाः लिङ्गेश्वरं तत्पत्नीं च कृतज्ञतापूर्वकं नमस्कृतवन्तः ।

यस्मिन् दिने लक्ष्मणस्य कुटीरस्य प्रवेशः जातः तस्मिन् एव दिने पार्वती एकं स्वप्नं दृष्टवती । स्वप्ने कश्चन दिव्यपुरुषः प्रत्यक्षीभूय अवदत् – ''अन्तर्वेदक्षेत्रस्य लक्ष्मीनरसिंहस्य दर्शनात् यावत् पुण्यं प्राप्येत तावदेव पुण्यं प्राप्यते कष्टे स्थितस्य साहाय्यकरणतः । मानवसेवा एव माधव-सेवा । अतः अहं फलं पुष्पं च भवत्यै यच्छन् अस्मि'' इति ।

जागरणं प्राप्तवती पार्वती पतिं स्वप्न-विचारम् उक्तवती । एकस्य वर्षस्य अनन्तरं तया एकः सुन्दरः पुत्रः प्राप्तः ।






## जीवनमेव यात्रामयम्



वयं प्रवासं कुर्मः तदा तदा । किन्तु आजीवनं तु प्रवासः न भवति अस्मासु कस्यापि । किन्तु हिमालयपरिसरे हिमाच्छादिते प्रदेशे वसन्तः 'गुज्जर'-कुलीयाः तु आजीवनं प्रवासं कुर्वन्ति । भारते विरलतया दृश्यमानासु जातिषु अन्यतमा एषा । ते प्रतिवर्षं पटगृहम्, अच्छादकादीनि वस्त्राणि, आहारवस्तूनि, अन्यानि गृहोपकरणानि च अश्वानाम् उपरि आरोप्य सहस्राधिककिलोमीटर् दूरं परिक्रमन्ति । नवम्बर्-मार्च्मासयोः मध्यकाले ते जम्मूप्रदेशे स्थितेषु रैसी-राजोरी-पुञ्छप्रभृतिषु प्रदेशेषु समूहरूपेण वसन्ति । यदा एप्रिल्मासः उपस्थितः भवति तदा हिमालयस्य उन्नते स्थाने स्थितान् शाद्वलान् प्रति गच्छन्ति ते । ग्रीष्मकाले तेषां विश्रान्तिस्थानम् एतत् । यदा सप्टम्बर्मासः सम्प्राप्यते तदा शाद्वलेभ्यः निर्गताः ते जम्मूस्थानि हेमन्तकालीनगृहाणि प्रति आगच्छन्ति ।

## ग्रामं संरक्षति देवः

तमिळुनाडुराज्ये चेन्नै समीपे 'मतिछुलयम्'नामकः कश्चन ग्रामः अस्ति । नारिकेलवृक्षबहुले समुद्रतीरे अस्ति सः ग्रामः । तस्य ग्रामस्य जनाः देवालयस्थे देवे महतीं श्रद्धां वहन्ति । तत्रत्यः आराध्यदेवः अस्ति मुनियप्प-स्वामी । सः स्वामी एव ग्रामस्थानि १३२ गृहाणि संरक्षति ।

तत्रत्याः वदन्ति यत् अद्यावधि ग्रामे एकम् अपि चौर्यं न जातम् इति । तत्रत्यानां गृहाणां न द्वाराणि, न वा दृढाच्छादनानि । यदि द्वाराणि, दृढाच्छादनानि वा क्रियेरन् तर्हि देवः कुप्यति इति भावयन्ति तत्रत्याः । द्विशताधिकवर्षेभ्यः पूर्वं निर्मितस्य मन्दिरस्यापि न सन्ति द्वाराणि, न वा दृढानि आच्छादनानि !





# कासारस्य निर्माणम्

नारायणः सीतापुरस्य ग्रामाधिकारी। कदाचित् सीतापुरे क्षामस्थितिः उत्पन्ना। तदा नारायणः चिन्तितवान् यत् अग्रे अपि क्षामकाले कष्टं यथा न स्यात् तथा कर्तुं ग्रामे एकः कासारः निर्मातव्यः इति। एतदर्थं महाराजस्य अनुज्ञा, आवश्यकं धनं च प्राप्तम्। नारायणः द्विशतं कर्मकरान् एतदर्थं नियोजितवान्।

कार्यं तु आरब्धं, किन्तु तत् मन्दगत्या अग्रे सरति स्म। सर्वे कर्मकराः समये न आगच्छन्ति स्म। केचन कार्यान्तरस्य व्याजं कथयन्तः शीघ्रं गच्छन्ति स्म। ये केचन तिष्ठन्ति स्म, ते अपि वार्तालापादिना कालं यापयन्ति स्म। अतः मासद्वयम् अतीतं चेदपि द्विपादपरिमितं खननम् अपि न जातम्।

एतदभ्यन्तरे एव भूषणः नाम कश्चन तं ग्रामम् आगतवान्। सः धनिकः। सः जानाति स्म यत् क्षामकारणतः बहवः तं ग्रामं परित्यज्य गच्छन्तः सन्ति इति। तादृशेभ्यः सः अल्पमूल्येन क्षेत्राणि क्रीतवान्। एवं ग्रामस्य पादोनभागमिता भूमिः तेन क्रीता। सोऽपि स्वस्य भूमेः मध्ये अपि एकं कासारं निर्मातुम् इष्टवान्। 'ग्रामाधिकारिणः यः कासारः अस्ति ततोऽपि द्विगुणितविशालः स्यात् मदीयः' इति सः अचिन्तयत्। एतदर्थं सः शतं कर्मकरान् योजितवान्। मासाभ्यन्तरे तस्य कासारः सिद्धप्रायः।

एतत् दृष्ट्वा नारायणः आश्चर्यचकितः। भूषणः यावत् वेतनं ददाति स्म ततोऽपि अधिकं वेतनं ददाति स्म नारायणः। कर्मकराणां संख्या अपि अधिका आसीत्। कासारस्य आकारः अपि अल्पः। तथापि कार्ये प्रगतिः तु नितरां मन्दा!

एतदर्थं नारायणः कासारं परितः वृत्तिं कारितवान्। वृतेः एकस्मिन् भागे द्वारं निर्मितम्! तत्र एकः रक्षकः नियोजितः! विलम्बेन आगन्तारः प्रवेशं नार्हन्ति इति नियमः कृतः। ये सम्यक् कार्यं न कुर्वन्ति

तेभ्यः वेतनं न दीयते इति घोषितम् । कार्यकाले बहिर्गमनस्य निषेधः अपि कृतः । एतस्य सर्वस्य पर्यवेक्षणार्थं कस्यचन पर्यवेक्षकस्य नियुक्तिः अपि कृता ।

एतस्मात् कर्मकराणाम् आगमनं गमनं च समये जातम् । परस्परवार्तालापः अपि न्यूनः जातः । तथापि कार्यप्रगतिः न दृश्यते स्म ।

एतस्य कारणं किम् इति नारायणेन अन्वेषणम् आरब्धम् । तस्मात् ज्ञातं यत् केचन रक्षकाय धनं दत्त्वा, मधुराणि वचनानि उक्त्वा वा विलम्बेन आगच्छन्ति इति । केचन कार्यं कुर्वन्तः अपि कार्ये श्रद्धां न प्रदर्शयन्ति स्म । किन्तु एतदभ्यन्तरे भूषणस्य कार्यम् अन्तिमघट्टे आसीत् । नारायणः एतस्य रहस्यं ज्ञातुं भूषणस्य गृहं गत्वा स्वस्य कष्टं निवेद्य कार्यप्रगतेः कारणं पृष्टवान् ।

तदा भूषणः अवदत् - ''दोषः न कर्मकरेषु अस्ति, प्रत्युत भवति अस्ति । भवान् कासारनिर्माणाय राज्ञः धनं व्ययीकुर्वन् अस्ति, अहं च स्वधनं व्ययीकुर्वन् अस्मि । एषः एव आवयोः कार्यस्य भेदः'' इति ।

''कार्यं तु कर्मकराः एव खलु कुर्वन्ति ? फले भेदः ततः एव खलु भवति ?'' इति अपृच्छत् नारायणः ।

''धनं राज्ञः इत्यतः राज्ञा निश्चितं वेतनं भवान् कर्मकरेभ्यः ददाति । धनं मदीयम् इत्यतः अहं कर्मकरस्य कार्यसामर्थ्यस्य अनुगुणं वेतनं ददामि । भवतः कर्मकराः जानन्ति यत् कार्यं न कृतं चेदपि वेतनं प्राप्यते एव इति । अहं तु तस्मै अधिकं वेतनं ददामि, यः अधिकपरिश्रमं करोति । अतः मम सर्वे कर्मकराः अधिकवेतनप्राप्त्यर्थं परिश्राम्यन्ति । अन्यच्च धनं मदीयम् इत्यतः अहं समग्रं कार्यं स्वयं परिशीलयामि । राज्ञः धनम् इत्यतः भवान् कादाचित्कतया कार्यं पश्यति । एतस्य कारणतः एव फले भेदः'' इति ।

दोषः कुत्र इति नारायणः इदानीं ज्ञातवान् । अतः सः अनन्तरदिने एव स्वकार्यशैल्यां परिवर्तनम् आनीतवान् । तस्मात् शीघ्रातिशीघ्रम् एव तदीयः कासारः अपि निर्मितः जातः ।



## केरलीया जानपदकथा

समुद्रस्य भूप्रदेशात् जातानां नील-सरोवराणां कारणतः, ताल-नारिकेल-वृक्षमयसमुद्रतीराणां कारणतः, अपूर्वस्य प्राकृतिकसौन्दर्यस्य कारणतः च केरल-राज्यम् उच्यते - 'दैवभूमिः' इति ।

'केरल'पदं 'केर'शब्दात् उत्पन्नम् । मलयालभाषायां केरपदस्य अर्थः भवति नारिकेलवृक्षः इति । केरलं भारतस्य लघु-तमराज्येषु अन्यतमम् अस्ति । ३८,८५५ चतुरस्रकिलोमीटरात्मकं विस्तीर्णम् एतस्य राज्यस्य । तन्नाम देशस्य १% भागः । अत्रत्या जनसंख्या ३१८,३८,६१९ मिता ।

१९५६ तमे वर्षे केरलराज्यस्य रचना जाता । तिरुवाङ्कूरुकोचिन्संस्थानाधीनान् प्रदेशान्, मद्रासशासनाधीनं मलबारप्रदेशं च संयोज्य केरलराज्यं निर्मितम् ।

एतत् राज्यं दीर्घाकारकम् अस्ति । अरेबियन्समुद्रतः पश्चिमघट्टपर्यन्तम् अस्ति एतस्य विस्तारः । एतस्य उत्तरभागे कर्णाटकराज्यं, पूर्वभागे तमिळुनाडुराज्यं, पश्चिमभागे अरेबियन्समुद्रः च अस्ति । १००% साक्षरतां साधितवत् राज्यं देशे केरलम् एकम् एव । केभ्यश्चित् वर्षेभ्यः पूर्वम् एव तेन एषा सिद्धिः प्राप्ता ।

# व्यवहारः निरूढः, किन्तु...

तस्य नाम 'कायङ्कुलं कोचुन्निः' इति । कायङ्कुलंग्रामः तिरुवाङ्कूरुसंस्थानस्य अधीनः आसीत् । कायङ्कुलंग्रामे तदितरत्र वा शूरत्वेन दयापरत्वेन च तत्समानः विरलतया एव लभ्यते स्म ।

कोचुन्निः निर्धनकुले जातः । जात्या मुस्लिमः सः । प्रतिदिनं नमस्काराय पञ्चवारं यवनालयं गच्छति स्म सः । यदा तथा गन्तुं न शक्यते तदा प्रार्थनास्मारकध्वनिम् अप्रतीक्षमाणः सः प्रार्थनावस्त्रं भूमौ प्रसार्य



जानुभ्यां पश्चिमाभिमुखम् उपविश्य यथाकालं प्रार्थनां समर्पयति स्म ।

तारुण्ये महत् दारिद्र्यकष्टम् अनुभूतम् आसीत् कोचुन्निना । अतः धनिकानां, महावणिजां, कुसीदवणिजां च विषये तस्य महान् क्रोधः । किन्तु दैवदुर्विपाकात् कस्यचित् वणिजः आपणे कार्यं करणीयम् आसीत् तेन ।

तस्य स्वामी न कठोरः । एतस्य श्रमशीलतां दृष्ट्वा सः सन्तुष्टः आसीत् । कथं ग्राहकाणां तृप्तिः करणीया, व्यवहारपरिशुद्धता कथं रक्षणीया इत्यादिकं सर्वं सः कोचुन्निं बोधितवान् आसीत् ।

कोचुन्निः प्रातः आगत्य स्वामिनः गृहात् कुञ्चिकां नीत्वा आपणम् उद्घाट्य स्वामिनः आगमनं प्रतीक्षते स्म । सायं स्वामिनः निर्गमनस्य अनन्तरम् आपणं समग्रं स्वच्छीकृत्य द्वारं पिधाय कीलयित्वा कुञ्चिकां स्वामिनः गृहे ददाति स्म । स्वामिनः पत्नी तस्मै प्रतिदिनं भोजनं ददाति स्म । तत् भोजनं पाथेयपात्रे निधाय गृहं नीत्वा विधवया मात्रा



सह भुङ्क्ते स्म सः ।

एकदा सायङ्काले यदा कोचुन्निः कुञ्चिकां स्वामिने प्रत्यर्प्य गृहं गन्तुम् उद्युक्तः तदा कश्चन सुपरिचितः ग्राहकः आतङ्कपूर्णतया पदानि स्थापयन् आपणिकं द्रष्टुम् आगतवान् । ''किं भवान् आपणस्य पिधानं कृतवान् एव ?'' इति पृच्छन् सः आपणिकगृहस्य अङ्गणे स्थितवान् ।

''आम् । किं भवान् किमपि अपेक्षते स्म ?'' इति पृष्टवान् आपणिकः ।

''महोदय ! अहम् इदानीम् एव शर्कराम् इच्छामि । श्वः मम कनिष्ठपुत्रस्य जन्मदिनम् । श्वः उषसि एव देवालये पूजा करणीया ।

## एवं हि श्रूयते...

केरलविषये एवं हि श्रूयते - विष्णोः अवतारभूतः परशुरामः केरलं सृष्टवान् इति । एकविंशतिवारं प्रपञ्चपर्यटनं कृतवान् परशुरामः तपसः निमित्तं देवान् स्थलं पृष्टवान् । तदा देवाः उक्तवन्तः यत् भवान् एव योग्यं स्थलं चिनोतु इति । अतः सः गोकर्णपर्वते स्थित्वा स्वकीयं परशुं समुद्रे क्षिप्तवान् । तदा यत्र परशुः पतितः तावत्पर्यन्तं जलम् अपगतं, भूमितलं च दृष्टिगोचरतां गतम् । एवं समुद्रस्य अपसरणात् सृष्टा भूमिः एव केरलम् इति उच्यते इति जनाः भावयन्ति ।

# जानपदनृत्यानि

केरले जानपदनृत्यप्रकाराणां बाहुल्यं दृश्यते । अत्र दृश्यमानाः प्रकाराः इदानीं देशस्य इतरभागेषु अपि दृश्यन्ते । 'कूथु'नामकम् एकपात्राभिनयस्वरूपकं नृत्यम् अत्र अतिप्रसिद्धम् । 'चक्यार्'नामकः नटः अत्र विविधानि पात्राणि अभिनयति । एतत् कूथुनृत्यम् एतदर्थम् एव रचिते 'कूथम्बालम्'-नामके नृत्यमण्डपे प्रचलति ।

कूडिकाट्टम् इत्येषः तत्रत्यस्य जानपदनृत्यस्य



अपरः प्रकारः । कथक्कली तु अन्यः नृत्यप्रकारः, यश्च समग्रेण देशेन ज्ञायते । वैभवोपेतानि आभरणवेषभूषादीनि, वर्णमयः मुखालङ्कारः, बहुवर्णशोभितं किरीटम् इत्यादीनि कथक्कलीनृत्यस्य वैशिष्ट्यानि । नृत्यस्य कथा पुराणं जानपदकथां वा अवलम्बते । मोहिनियाट्टम्, थुल्लाल्, कैकोट्टिकलि इत्यादीनि अपि केरलीयनृत्यप्रकारेषु अन्यतमानि ।



इदानीं यदा अहं कुतश्चित् प्रत्यागतः तदा मम पत्नी उक्तवती यत् श्वस्तनपूजायाः निमित्तं यत् पायसं सज्जीकरणीयं तदर्थं गृहे शर्कराकणिका अपि नास्ति इति । एतस्मिन् असमये कुत्र वा शर्करा प्राप्येत ? किं भवान् मम साहाय्यं कर्तुं शक्नुयात् ?'' इति दैन्येन पृष्टवान् सः ग्राहकः ।

''अस्तु, प्रयत्नं करोमि'' इति तम् उक्त्वा आपणिकः मुखद्वारसमीपे गच्छन्तं कोचुन्निम् उद्दिश्य - ''कोचुन्ने, भोः कोचुन्ने ! अत्र आगच्छतु । एषः अस्माकं सुपरिचितः ग्राहकः शर्कराम् इच्छति त्वरया । एतम् आपणं नीत्वा एतस्मै शर्करां दत्त्वा आगच्छतु'' इति आदिशत् ।

''अस्तु महोदय ! इदानीम् एव आपणं गमिष्यामि'' इति स्वामिनम् उक्त्वा - ''श्रीमन् ! आगच्छतु, आपणं गच्छाव''

# करकौशलवस्तूनि



केरलीयाः करकौशलवस्तुनिर्माणविषये सिद्धहस्ताः । केरलीयाः कलाकारपरिवाराः विश्वकर्माणं स्ववंशस्य पूर्वपुरुषं मन्यन्ते । विश्वकर्मा देवलोकस्य कलाकारः । अत्र शिलाधात्वादीनां शिल्पस्य यावत् प्राधान्यं, ततोऽपि अधिकं प्राधान्यं दृश्यते काष्ठशिल्पस्यैव । वेणुशिल्पं, गजदन्तशिल्पं चापि एतस्मिन् राज्ये प्रसिद्धम् अस्ति । किन्तु एषु दिनेषु गजदन्तस्य उपयोगः निषेधितः अस्ति । नारिकेलफलस्य आवरणे चित्रादिनिर्माणम् अपि केरले प्राधान्येन प्रचलति ।

केरले दृश्यमानम् अपरं शिल्पं नाम कांस्यशिल्पम् । देवदेवतादीनां मूर्तयः अत्र कांस्येन निर्मीयन्ते । दीपनिर्माणकला अपि अत्र विशेषतः दृश्यते । विविधाकारकाः दीपाः अत्र उपलभ्यन्ते । लोहदर्पणकला अपि एतस्मिन् एव राज्ये दृश्यते । एषा कला चतुश्शतवर्षेभ्यः पूर्वम् एव अत्र आरब्धा । लोहस्य विशेषसंस्कारेण काचकं विनैव प्रतिबिम्बदर्शनयोग्यः दर्पणः निर्मीयते ।

नारिकेलफलावरणस्थाभिः शलाकाभिः अनेकानि वस्तूनि निर्मीयन्ते । कटाः, पादशोधकानि इत्यादीनि तेषु अन्यतमानि ।

इति ग्राहकम् उद्दिश्य अवदत् कोचुन्निः ।

समयस्य व्यर्थता न करणीया इति चिन्तयित्वा तेन ग्राहकेण सह वेगेन प्रस्थितवान् कोचुन्निः । यदा आपणसमीपम् आगतं तदा कोचुन्निः स्मृतवान् यत् त्वरावशात् आगमनसमये कुञ्चिकायाः आनयनम् एव विस्मृतम् इति । स्वगृहं प्रति निर्गमनात् पूर्वं कोचुन्निः कुञ्चिकां स्वामिनः पत्न्यै दत्तवान् आसीत् ।

''श्रीमन् ! अहं क्षन्तव्यः । आगमनसमये मया कश्चन लोपः कृतः । कुञ्चिकायाः आनयनम् एव विस्मृतम् आसीत् मया'' इति





ग्राहकम् अवदत् कोचुन्निः ।

"किम् उक्तं भवता ? कुञ्चिका एव न आनीता इति ? कुञ्चिकां विना आपणस्य उद्घाटनं कथम् ? महामूर्खः भवान् ! मया तु त्वरया शर्करा अपेक्ष्यते । मूर्खः भवान् मम त्वरां न जानाति" इति तर्जितवान् सः ग्राहकः ।

"श्रीमन् ! मया दोषः कृतः । अतः अहं क्षन्तव्यः । क्षणं तिष्ठतु । शर्कराप्राप्तिमार्गं कमपि चिन्तयामि अहम्" इति उक्त्वा कोचुन्निः चिन्तनम् आरब्धवान् ।

तेन आपणः समग्रः सकृत् परीक्षादृष्ट्या दृष्टः । आत्मना अधीता 'कलरि'विद्या तेन स्मृता । तस्याः उपयोगेन सः आपणस्य छदौ स्थितम् एकं मृच्छदं भञ्जितवान् । ततः अन्तः प्रविश्य पृष्ठभागस्य द्वारम् उद्घाट्य शर्करां स्वीकृत्य यथापूर्वं पृष्ठभागद्वारं पिधाय येन मार्गेण गतं तेनैव मार्गेण प्रत्यागतवान् । शर्करां ग्राहकाय दत्तवान् च ।

शर्करां प्राप्य सन्तुष्टः सः ग्राहकः – "भवान् एवम् उपकारशीलः इति अहं न जानामि स्म । भवतः स्वामिनं मम कृतज्ञताः ज्ञापयतु" इति उक्त्वा कानिचन नाणकानि कोचुन्नये दत्त्वा ततः प्रतिगतवान् ।

ग्राहकः सन्तोषेण गतः इत्यतः कोचुन्निः अपि नितरां सन्तुष्टः । 'ग्राहकस्य सन्तोषः मम स्वामिनः अपि सन्तोषाय । अतः मम कृत्येन स्वामी सन्तुष्टः स्यादेव' इति अचिन्तयत् सः ।

यदा कोचुन्निः गृहं प्रत्यागतः तदा स्वामी तम् उद्दिश्य – "भवान् कुञ्चिकाम् अस्वीकृत्य एव गतवान् । भोः, सः ग्राहकसज्जनः कुत्र गतः ?" इति अपृच्छत् ।

"सः तु शर्करां प्राप्य स्वगृहं गतवान् । तस्मै यावत् आवश्यकं तावतीं शर्कराम् अहं दत्तवान् अस्मि । एतस्मात् नितरां सन्तुष्टः सः शर्करामूल्यं मह्यं दत्त्वा ततः निर्गतवान्" इति उक्त्वा नाणकानि यजमानाय दत्तवान् कोचुन्निः ।

धनं प्राप्य अपि आपणिकः न सन्तुष्टः । सः सन्देहेन कोचुन्निम् अपृच्छत् – "कुञ्चिकां विना भवता कथम् आपणः उद्घाटितः ?" इति ।

"मया आपणः न उद्घाटितः एव" इति वदन् कोचुन्निः आत्मना कृतं विस्तरेण विवृतवान् ।

"भवान् एतादृशवञ्चनाविद्यायाम् अपि निपुणः इति भाति । तदस्तु, इदानीं भवान्

गृहं गच्छतु'' इति उक्त्वा आपणिकः तं प्रेषितवान् । कोचुन्निः पाथेयपात्रं स्वीकृत्य ततः स्वगृहं प्रति गतवान् । अनन्तरदिने यदा कोचुन्निः कुञ्चिकां स्वीकर्तुं स्वामिनः गृहं गतवान् तदा ज्ञातं यत् स्वामी तावता एव आपणं प्रति गतवान् इति । अतः कोचुन्निः वेगेन आपणं प्रति गतवान् । तत्र स्वामी तम् उक्तवान् - ''कोचुन्ने ! गतरात्रौ यत् प्रवृत्तं तद्विषये बहुधा चिन्तितं मया । यद्यपि भवतः अन्ये सर्वे व्यवहाराः उत्तमाः सन्ति, तथापि ह्यस्तनः भवतः व्यवहारः मयि सन्देहं जनयति । भवतः विश्वासार्हता नष्टा अस्ति । अतः इतःपरं भवतः सेवा मह्यं न आवश्यकी । एतत् स्वीकरोतु भवतः वेतनम् । भवान् अन्यत्र कुत्रापि उद्योगम् अन्वेष्टुम् अर्हति'' इति ।

कोचुन्निः आश्चर्येण स्तब्धः । स्वामिनः ग्राहकः असन्तुष्टः न भवेत् इति चिन्तयता तेन कश्चन मार्गः आश्रितः आसीत् । किन्तु सः व्यवहारः एव तदीयस्य उद्योगस्य नाशस्य कारणं जातः आसीत् । एतस्मात् नितरां खिन्नः कोचुन्निः विना प्रतिवचनं स्वामिना दत्तं धनं स्वीकृत्य ततः निर्गतवान् । धनिकानां विषये तस्य या असन्तुष्टिः आसीत् सा एतया घटनया अधिका जाता ।



## दर्शनयोग्यानि स्थलानि

केरले दर्शनीयानि स्थलानि सन्ति बहूनि । समग्रं राज्यम् एव प्राकृतिकसौन्दर्येण सुशोभते । अत्र बहूनि अभयारण्यानि अपि सन्ति । इडुक्किजनपदे तेक्काडिनामके स्थले स्थितं पेरियार्-अभयारण्यं तावत् नितरां सुप्रसिद्धम् । पेरियार्नद्याः प्रवाहम् अवरुध्य निर्मितस्य सेतोः कारणतः यत् जलागारं निर्मितं तेन आवृतम् अस्ति एतत् अभयारण्यम् । व्याघ्रसन्ततिसंरक्षणस्य अङ्गतया एषः प्रदेशः १९७८ तमे वर्षे व्याघ्रावासत्वेन परिगणितः । अत्र गजाः, वन्यमहिषाः, हरिणाः, डयनसमर्थाः चिक्रोडाः इत्यादयः अपि वसन्ति । अत्रत्ये सरोवरे गजाः मज्जन्तः शुण्डया जलं गृहीत्वा यत् सिञ्चन्ति तत् तु नितराम् आकर्षकम् अस्ति ।

मुन्नार्पर्वतः, तालपङ्क्तिशोभितं कोचिन्तीरं, अतिरम्पल्लीजलपातः, तिरुवनन्तपुरसमीपे स्थितानि कोवलं-प्रभृतीनि समुद्रतीराणि इत्यादीनि अत्रत्यानि दर्शनीयस्थलेषु अन्यतमानि ।

# वार्ताविशेषः

## अश्वमेधयागः गुजराते



वयं शृणुमः यत् श्रीरामेण युधिष्ठिरेण च अश्वमेधयागः अनुष्ठितः आसीत् इति । अस्य यागस्य सर्वेषां नियमानां पालनपुरस्सरम् एषः एव यागः अनुष्ठास्यते अचिरात् एव गुजरातराज्ये, यच्च २००१ तमे वर्षे भूकम्पपीडितम् आसीत् । एतस्य निमित्तम् काष्ठमयः अश्वः निर्मितः उत्तरकेरलस्थे काञ्ञङ्गाड्प्रदेशे । षट्पादोन्नतस्य सप्तपाददीर्घस्य अखण्डेन आम्रकाष्ठेन रचितस्य एतस्य निर्माता अस्ति तमिळुनाडुराज्ये स्थितस्य कल्लकुरुचिग्रामस्य निवासी स्वामिदुरै । एतस्य निर्माणार्थं तेन मासात्मकः कालः गृहीतः । अलङ्कारादिनिमित्तं च पक्षात्मकः कालः अपेक्षितः अभवत् । पित्तलावरणेन अलङ्कृतः एषः अश्वः अनावृते रैलप्रकोष्ठे स्थापयित्वा नीतः । जनानां दर्शनार्थम् एवं कृतम् आसीत् । पक्षात्मकप्रयाणम् आसीत् तत् । प्रयाणावसरे मन्त्रपठनम् अनुस्यूततया प्रवर्तते स्म ।

## मौनदिनम्



एप्रिल्मासस्य १३ दिनाङ्कः नववर्षारम्भत्वेन आचर्यते भारते बहुत्र । सर्वत्र महान् उत्साहः भवति तद्दिने । किन्तु तदेव दिनं बालिद्वीपे मौनदिनत्वेन आचर्यते । बालिद्वीपे हिन्दवः बहुसङ्ख्याकाः । तस्मिन् दिने जनाः गृहे एव तिष्ठन्ति । न कार्यं क्रियते, न प्रवासः क्रियते । विद्युद्यन्त्राणि न शब्दं कुर्वन्ति । मनोविनोदाय न किमपि क्रियते । न कोऽपि दूरदर्शनं पश्यति, न आकाशवाणीं शृणोति । दूरवाण्यः न शब्दं कुर्वन्ति । यात्रिकाः वसतिगृहेषु एव तिष्ठन्ति । विमानानि आकाशे न सञ्चरन्ति । नौकाः न तीरात्-अग्रे गच्छन्ति । पूर्वदिने रात्रौ दुष्टशक्तिः समुद्रं प्रति प्रेष्यते, अनन्तरदिने प्रत्यागम्यते च । अनन्तरदिने राष्ट्रियः विरामः भवति ।



# विघ्नेश्वरः

स्वविवाहविषये विघ्नान् उपस्थापयतः विघ्नेश्वरस्य विषये महान् क्रोधः आसीत् कुमारस्वामिनः । सः मातरम् अवदत् - ''अम्ब ! मम अग्रजः अयोग्यः एव । एषः कदा वा योग्यतां प्राप्नुयात् ? सर्वदा खादन् लम्बोदरत्वं प्राप्तवान् एषः महत् कार्यं कदा वा साधयितुं शक्नुयात् ?'' इति ।

एतत् श्रुत्वा विघ्नेश्वरः अश्रूणि स्रावयन् मातरम् उद्दिश्य - ''अम्ब ! पश्यतु एतम् । माम् एवम् उपहसति एषः'' इति अवदत् ।

एतत् श्रुत्वा पार्वती कोपं प्राप्तवती । सा विघ्नेश्वरम् आलिङ्ग्य - ''वत्स ! मया या मूर्तिः निर्मिता तस्याः शिरसः छेदं कृतवान् भवतः पिता । एषः तु भवन्तम् उपहसति । अज्ञानवशात् तौ एवं कुरुतः'' इति उक्तवती ।

तदा गणपतिः अपृच्छत् - ''एषः अनुजः अज्ञानी भवितुम् अर्हति । किन्तु पिता कथं वा अज्ञानी स्यात् ? मूर्खता भवत्याः'' इति ।

''मूर्खता न मम, अपि तु भवत्पितुः एव । अतः एव खलु सः विष्णोः अवतारभूतां मोहिनीम् अनुसरन् गतवान्, उपहासपात्रतां च प्राप्तवान् ?'' इति सविषादम् उक्तवती पार्वती ।

''एतस्य परिणामः कः जातः अम्ब !'' इति पृष्टवान् गणपतिः ।

''विलक्षणः परिणामः एव जातः ततः । तयोः समागमतः भैरवः नाम कृष्णशरीरः कश्चन बालकः उत्पन्नः अस्ति '' इति उक्तवती पार्वती ।

''अम्ब ! सः भैरवनामकः बालकः कुत्र अस्ति ? तम् अहं द्रष्टुम् इच्छामि'' इति गणपतिः उक्तवान् ।



''सः कुत्रचित् वसति इति श्रूयते । सः कृष्णवर्णीयं वस्त्रं धरति । तस्य समीपं कदाचिदपि मा गच्छतु भवान् । तस्य दर्शनात् भवान् भीतः भवेत्'' इति पार्वती उक्तवती ।

''अम्ब ! भीतिः नाम का ? सा कीदृशी भवति इति मया ज्ञातव्यं खलु ?'' इति अवदत् गणपतिः ।

''विवाहः जातः चेत् तत् स्वयं ज्ञायते भवता'' इति हसन्ती उक्तवती पार्वती ।

''पतिपत्नीसम्बन्धः किं तादृशः भयङ्करः भवति ? अतः एव अम्ब, अहं विवाहं न इच्छामि'' इति उक्तवान् गणेशः ।

एतदभ्यन्तरे कुमारस्वामी मध्ये प्रविश्य – ''भवान् महाकार्यं किमपि साधयितुं किं न इच्छति ? एषोऽहं सूर्यस्य परिक्रमणं कृत्वा आगमिष्यामि, पश्यतु'' इति उक्त्वा मयूरम् आरुह्य ततः निर्गतवान् । विघ्नेश्वरः तु मेरुपर्वतम् आरुह्य उन्नते शिखरे उपविष्टवान् । सूर्यः मेरुपर्वतस्य परिक्रमणं करोति । मेरुपर्वते कदापि रात्रिः न भवति ।

कुमारस्वामी महता श्रमेण सूर्यस्य परिक्रमणं समाप्य प्रत्यागतवान् । तदा तेन मेरुपर्वतस्य शिखरे उपविष्टः अग्रजः दृष्टः । एतत् दृष्ट्वा सः नितरां लज्जितः जातः । तदा पार्वती पृष्टवती – ''वत्स ! किमर्थं भवान् लज्जितः इव दृश्यते ? भवतः लज्जायाः किं कारणम् ?'' इति ।

''अहं तु सूर्यस्य परिक्रमणं कृत्वा आगतवान् । किन्तु मम अग्रजः आत्मानं परितः सूर्यम् एव परिक्रामयति । अतः तस्यैव कार्यं मम कार्यात् महत्'' इति उक्तवान् कुमारस्वामी ।

एतस्याः घटनायाः अनन्तरं पुनः कदाचित् पार्वती विघ्नेश्वरस्य पुरतः विवाहप्रस्तावम् उपस्थापितवती । तदा विघ्नेश्वरः अवदत् – ''अम्ब ! सौन्दर्येण भवत्सदृशी यदि कापि कन्या स्यात् तर्हि तां दर्शयतु । अहं ताम् एव परिणेष्यामि'' इति ।

एतत् श्रुत्वा पार्वती नितरां सन्तुष्टा । ''भवान् गृहस्य पुरतः उपविश्य गमनागमनकर्तॄन् परिशीलयन् मत्सदृशीं काञ्चित् अभिजानातु'' इति उक्त्वा स्वकार्याय गतवती ।

''तथैव करोमि अम्ब !'' इति उक्त्वा विघ्नेश्वरः गृहस्य पुरतः उपविष्टवान् । आदौ तेन पूर्वस्यां दिशि दृष्टम् । ततः पश्चिमायां दृष्टिः प्रसारिता । एवम् एव दशसु दिक्षु अपि तेन दृष्टम् ।

विघ्नेश्वरस्य एतं विचित्रव्यवहारं दृष्ट्वा पार्वती पृष्टवती - ''वत्स ! किं भवता काऽपि कन्या दृष्टा ?'' इति ।

विघ्नेश्वरः अवदत् - ''अम्ब ! मया यत्र यत्र दृष्टं तत्र सर्वत्र अष्टहस्तधारिणी जगज्जननीरूपिणी भवती एव दृष्टा । भवत्याः ऋते अन्या कापि मया न दृष्टा एव'' इति ।

एतत् श्रुत्वा महान्तं हर्षं प्रकटयन्ती पार्वती उक्तवती - ''वत्स ! विघ्नराज ! पूर्वस्यां दिशि एव पूजाम् अर्हन्ति सर्वेऽपि देवाः । भवान् तु सर्वासु दिक्षु पूजाम् अर्हति'' इति ।

एतदनन्तरं पार्वती विघ्नेश्वरस्य विवाह-प्रस्तावं विस्मृत्य तेन उक्तानि मधुराणि वचनानि पतिं श्रावयन्ती कालं यापितवती ।

एवम् एव दिनानि गतानि । पार्वती पुनरपि कदाचित् विघ्नेश्वरस्य पुरतः विवाहप्रस्तावं कृतवती । तदा विघ्नेश्वरः अवदत् - ''अम्ब ! एषः मम अनुजः देवानां सेनापतिः अस्ति । अतः कन्याद्वयम् अपि परिणेतुम् अर्हति सः । अहं तु उपविश्य उदरं वर्धयन् अस्मि । एतादृशः अहं कथं वा विवाहयोग्यः भवेयम् ?'' इति ।

तदा तत्रैव स्थितः शिवः अवदत् - ''भवान् समस्तस्य मम प्रमथगणस्य अधिपतिः भवतु'' इति ।

''तात ! भवान् पुत्रप्रेमवशात् एवं वदन् अस्ति । किन्तु तत् पदं वोढुं काऽपि योग्यता भवेत् खलु मम ? अनुजः देवसेनापतिस्थानम् अलङ्कुर्वन् एतादृशं कार्यं निर्वोढुं विशेषसामर्थ्यं प्राप्तवान् अस्ति । एवं स्थिते तस्मिन् स्थाने मम नियुक्तितः किं वा प्रयोजनम् ?'' इति अपृच्छत् विघ्नेश्वरः ।

प्रमथगणीयाः बहवः कुमारस्वामिनम् एव स्वामित्वेन इष्टवन्तः । तदा शिवः उक्तवान् -






''मम गणस्य नायकः गणपतिः एव भवितुम् अर्हति । कुमारस्वामी तु एतावता एव देवसेनापतिपदे स्थितः अस्ति एव । एकः एव पदद्वयस्य भारं वोढुं न अर्हति । अतः गणपतिः एव मम गणस्य नायकः भवतु'' इति ।

तदा विघ्नेश्वरः अवदत् - ''किम् अधिकचर्चया ? काचित् परीक्षा आयोज्यताम् । तत्र यः सफलः भवति तं गणस्य अधिपतिं करोतु'' इति ।

एषः प्रस्तावः सर्वैः अङ्गीकृतः । ततः देवाः प्रमथगणीयाः च समालोच्य एकां परीक्षां निश्चितवन्तः । पृथिव्यां स्थितानि सर्वाणि तीर्थक्षेत्राणि यः दृष्ट्वा आगमिष्यति तस्य एव विजयः घोषणीयः इति निर्णीतम् ।

एतदनन्तरं कुमारस्वामी मयूरम् आरुह्य वेगेन ततः निर्गतवान् । विघ्नेश्वरः तु निश्चिन्ततया तत्रैव उपविष्टवान् ।

एतत् दृष्ट्वा विष्णुः विघ्नेश्वरम् एकान्ते अवदत् - ''भवतः विषये अस्माकं वात्सल्यम् अधिकम् । यदि भवतः पराजयः स्यात् तर्हि सर्वे देवाः खिन्नाः स्युः । पितुः श्रेष्ठतायाः प्रतिपादनात् एव पुत्रस्य सार्थकता । एतदर्थं भवता महान् श्रमः करणीयः नास्ति । मया यथा उच्यते तथा आचरितं चेत् भवतः इष्टं सिद्धम् इव'' इति । एतदनन्तरं सः गणपतेः कर्णे किमपि उक्तवान् ।

पार्वती दीर्घं निश्श्वस्य कृतज्ञताभावनया विष्णुं दृष्टवती ।

एतदनन्तरं विघ्नेश्वरः पद्मासने उपविश्य नेत्रे निमील्य शिवपञ्चाक्षरीमन्त्रस्य जपम् आरब्धवान् ।

कुमारस्वामी यत् यत् तीर्थस्थानं गतवान् तत्र सर्वत्र तेन वार्ता प्राप्ता यत् इतः पूर्वम् एव गणपतिः मूषकम् आरुह्य आगत्य स्नानं समाप्य गतवान् इति । एतत् ज्ञात्वा सः नितराम् आश्चर्यचकितः । सः निराशतया प्रत्यागत्य स्वस्य पराजयम् अङ्गीकुर्वन् विघ्नेश्वरस्य विजयितां घोषितवान् ।

विघ्नेश्वरः कुमारस्वामिनः हस्तं हस्तेन गृहीत्वा शिवसमीपं नीत्वा प्रवृत्तं निवेदितवान् - ''भ्रातः ! एतदवसरे न मम जयः, न वा भवतः पराजयः । वयं सर्वे निमित्तभूताः । जयः तु अस्माकं पितुः एव । यतः पञ्चाक्षरीमहिमकारणतः एव एतत्सर्वं जातम् । जयः शिवनाम्नः जातः । एतस्य जयस्य कारयिता अस्ति विष्णुः'' इति ।



एतदनन्तरं कुमारस्वामी विघ्नेश्वरः च शिवं साष्टाङ्गं नमस्कृतवन्तौ ।

कुमारस्वामी सर्वेषां मध्ये स्थित्वा उक्तवान् - ''प्रमथगणस्य अधिपतित्वेन विघ्नेश्वरस्य पट्टाभिषेकः अचिरात् एव प्रवर्तेत । एषा शिवस्य आज्ञा । अतः एषा सर्वेषां शिरोधार्या अस्ति'' इति ।

एतत् श्रुत्वा सर्वे देवाः प्रसन्नाः । सिद्ध-साध्य-यक्ष-भूतगणादयः अपि प्रसन्नाः । किन्तु प्रमथगणीयाः प्रमुखाः भृङ्गीश्वर-शृङ्गीश्वर-चण्डीश्वर-नन्दीश्वरादयः एतस्य विरोधं कृतवन्तः । बाल्यावस्थायां गणपतिः तेषां गर्वं भञ्जितवान् इत्येतदेव एतस्य विरोधस्य कारणम् आसीत् ।

अतः ते उक्तवन्तः - ''कुमारस्वामी देवगणस्य सेनाधिपतिः अस्ति । वयं सर्वे शिवस्य विश्वासपात्रभूताः । शिवगणरूपेण अस्माकम् अभिज्ञानम् अस्ति । एतादृशानाम् अस्माकम् अधिपतिः विघ्नेश्वरः कथं भवितुम् अर्हति ? किं सः कस्यापि गणस्य नायकः अस्ति एतावता ? किं तस्य गणः कोऽपि अस्ति ? गणाधिपतित्वेन तस्य पट्टाभिषेकः कथं न्याय्यः स्यात् ?'' इति ।

एतत् श्रुत्वा शिवः नितरां क्रुद्धः । सः प्रमथगणीयान् उद्दिश्य अवदत् - ''किं भवन्तः मम आज्ञायाः अपि औचित्यविमर्शं कर्तुं समर्थाः जाताः ?'' इति ।

तदा विघ्नेश्वरः शान्तचित्ततया अवदत् - ''आम् । एते युक्तम् एव वदन्तः सन्ति । मम गणः कुत्र अस्ति ? कुत्रापि नास्ति । आम्, अहं स्मरामि । बाल्ये मम कश्चन गणः आसीत् । स च गणः इदानीं कुत्र इति कथम् अन्विष्येयम् ?'' इति ।

तदनन्तरक्षणे एव कोटिशः विघ्नेश्वर-

सदृशाः आकाराः तत्र सर्वत्र दृष्टिगोचरतां गताः ।

तेषु केषाञ्चित् हस्तेषु आयुधानि आसन् । पुनः केषाञ्चित् हस्तेषु अन्यानि साधनानि । केचन लेखनीं, कूर्चान्, वर्णपात्राणि च गृहीतवन्तः आसन् । अन्ये केचन शूल-धनुर्बाण-खड्ग-गदादीन् गृहीतवन्तः आसन् । इतरे केचन वीणा-मृदङ्ग-मुरज-मड्डुकादीनि, मूलानि, हलं, रत्नाद्याभरणानि, फल-पुष्प-मालाः, पुस्तकानि, जपमालाः इत्यादीनि च गृहीतवन्तः आसन् । तेषां मध्ये देवताः प्रमथगणीयाः च दृश्यन्ते स्म ।

विघ्नेश्वररूपधारिणः केचन ऊर्ध्वदेशे वर्धमानाः आकाशं स्पृशन्तः इव आसन् । तेषु केषाञ्चित् हस्ते छत्रचामरादयः आसन् । केषाञ्चित् हस्ते ध्वजाः आसन् । केचन रत्नखचितसिंहासनम् आनीय तस्मिन् विघ्नेश्वरम् उपवेशितवन्तः । पुनः केचन तदुपरि छत्रं गृह्णन्तः चामरेण वीजनम् आरब्धवन्तः । श्वेतच्छत्रं रत्नजालिकया शोभते स्म । कश्चन मूषकः विघ्नेश्वरस्य पादमूले नृत्यति स्म ।

एतत् दृश्यं दृष्ट्वा पार्वती सिंहासनाभिमुखं स्थित्वा नमस्कर्तुम् उद्युक्ता । तदा विघ्नराजः हस्तसङ्केतेन तां निवारयन् अवदत् - ''अम्ब ! अहं भवत्याः पुत्रः अस्मि । अतः एषः नमस्कारः न उचितः'' इति ।

तदनन्तरक्षणे ते सर्वे अदृश्यतां गताः । विघ्नेश्वरः एकः एव तत्र अवशिष्टः । सः भक्त्या मातरं नमस्कृतवान् ।

तदवसरे 'विघ्नेश्वर !' इत्येषः शङ्खध्वनि-सदृशः कश्चन ध्वनिः श्रुतः । एषः विष्णोः कण्ठध्वनिः आसीत् । विघ्नेश्वरः विष्णोः दिशि मुखं कृत्वा अवदत् - ''भवान् किं वक्तुम् इच्छति इति अहं जानामि एव'' इति ।

''भवान् जानीयात् कदाचित् । किन्तु अन्ये एतत् न जानन्ति । तैः अपि ज्ञातव्यः विषयः एषः'' इति विघ्नेश्वरम् उक्त्वा सर्वान् उद्दिश्य सः अवदत् - ''विघ्नेश्वरस्य विवाहस्य सहस्रं विघ्नाः इति वचनम् एव अस्ति । एषः विघ्नेश्वरः स्वविवाहविषये एतावता सहस्रं विघ्नान् उपस्थापितवान् । अतः इतः परं सः विवाहविषये विघ्नम् उपस्थापयितुं न अर्हति । यदि उपस्थापयेत् तर्हि अपि सः अकिञ्चित्करः एव भविष्यति'' इति ।





# सावित्र्याः बुद्धिमत्ता

भारतीसूरजौ दम्पती । तयोः विवाहः वर्षात् पूर्वम् अभवत् । तदा एव तयोः मध्ये कलहः मनस्तापश्च आरब्धः । प्रातः आरभ्य रात्रिपर्यन्तं केनापि कारणेन तौ कलहं कुर्वन्तौ एव भवतः स्म ।

कदाचित् भारती मार्जालशिशुम् एकं गृहं प्रति आनीतवती । सूरजः तं मार्जालशिशुं कुत्रापि दूरे त्यक्त्वा एकं शुनकशिशुम् आनीतवान् । एकस्मिन् दिने सः शुनकः बुभुक्षया आक्रन्दनं कर्तुम् आरभत । भारती तस्मै आहारं कमपि न दत्तवती । दण्डेन ताडितवती च । तस्मिन् समये एव गृहम् आगतः सूरजः एतत् सर्वं दृष्टवान् । कुपितः सः तेनैव दण्डेन भारतीं ताडितवान् ।

भारती क्रन्दनं कुर्वती, अपरस्मिन् मार्गे स्थितस्य अग्रजस्य धर्मवीरस्य गृहं गता । धर्मवीरः यदा कारणं पृष्टवान् तदा सा न केवलं वस्तुस्थितिम् उक्तवती, अपि तु तेन सह उत्प्रेक्षांशम् अपि योजयित्वा स्वनिर्धारं प्रकटितवती यत् इतःपरं सूरजेन सह वासः न शक्यते इति ।

धर्मवीरः स्वभावतः मृदुः । सः अन्यस्य कष्टपरिस्थितिं द्रष्टुं न शक्नोति । कष्टपरिस्थितौ मग्नानां किमपि साहाय्यं कर्तुं तस्य मनः उद्युक्तं भवति स्म । स्वभगिन्यां महती प्रीतिः आसीत् तस्य । अतः सः– ''अहं सूरजेन सह वार्तालापं करिष्यामि । तावत्पर्यन्तं भवती अत्रैव तिष्ठतु'' इति वदन् भारतीम् अनुनीतवान् ।

द्वितीयदिने सूरजस्य गृहं गतः सः तं हितवचनानि उक्तवान् – ''कुटुम्बनिर्वहणम् उभयोः अपि दायित्वम् । परस्परम् उभौ अपि अन्यं प्रति आदरभावं प्रदर्शयेताम्'' इति । सूरजः धर्मवीरस्य समग्रं हितवचनं विना वचनं श्रुत्वा भारतीं गृहं प्रति आनीतवान् ।



किन्तु एतावता समस्या न समाप्ता । पञ्चषेषु दिनेषु एकवारम् एवमेव कलहं कुर्वती भारती अग्रजगृहं गच्छति स्म । अग्रजः धर्मवीरः पुनः पुनः सान्त्वनवचनानि कथयित्वा तां प्रति-प्रेषयति स्म ।

एतत्सर्वं पश्यन्तः पार्श्वगृहसदस्याः भ्रातृ-भगिन्योः व्यवहारविषये अनौचित्यारोपं कृतवन्तः । तेन धर्मवीरः बहु दुःखितः जातः । सः सर्वदा अन्यमनस्कः सन् सर्वेषु कार्येषु उदासीनः आसीत् । धर्मवीरस्य पत्नी सावित्री पत्युः एतां परिस्थितिं दृष्ट्वा कारणं पृष्टवती ।

तदा धर्मवीरः स्वस्य परिस्थितिं वदन् - ''अस्मिन् विषये किं करोमि ? अस्मात् कथं मुक्तः भविष्यामि ?'' इति ताम् अपृच्छत् ।

एतत् श्रुत्वा सावित्री हसन्ती उक्तवती - ''अस्याः समस्यायाः परिहारः न कष्टकरः । अतः चिन्ता मास्तु'' इति ।

अनन्तरदिने एव पुनः भारती पूर्ववदेव रुदती, पतिं निन्दन्ती धर्मवीरस्य गृहम् आगता । यदा सा गृहस्य अन्तः पदं स्थापितवती तदा तत्रत्यं दृश्यं दृष्ट्वा सा नितराम् आश्चर्यचकिता ।

यतः गृहे सर्वाणि वस्तूनि अव्यवस्थिततया पातितानि आसन् । अन्तः प्रकोष्ठे धर्मवीरः उच्चैः पत्नीं सावित्रीं कथयन् आसीत् - ''भवती मूर्खा अस्ति । भूताविष्टा इव अस्ति । अत एव गृहे स्थितानां वस्तूनां नाशं कुर्वती अस्ति'' इति ।

''सत्यम् ! अहम् उन्मादिनी अस्मि । मयि भूतः प्रविष्टः अस्ति । किन्तु विवाहानन्तरमेव मम बुद्धिः एवम् अभवत् । ततः पूर्वम् अहम् उत्तमा एव आसम् । मम मातापितरौ किञ्चिदपि अविचिन्त्य मम विवाहं कृतवन्तौ'' इति वदन्ती सावित्री अपि उच्चैः आक्रोशनम् अकरोत् ।

धर्मवीरः इतोऽपि कुपितः सन् - ''अधिकं मा वदतु । अस्माकं गृहम् आगत्य सर्वं कलुषीकृतं भवत्या'' इति उक्तवान् ।

सावित्री अपि उच्चैः - ''सत्यम् ! भवान् अपि मूर्खः । भवतः परिवारः अपि तादृशः एव'' इति उक्तवती ।

एतत्सर्वं भारती गृहस्य द्वारभागे एव स्थित्वा श्रुतवती । तदा सोढुम् अशक्ता सा वेगेन प्रकोष्ठस्य अन्तः गत्वा उक्तवती - ''भ्रातः ! भवान् किमर्थं तूष्णीं स्थितः ? अस्माकं परिवारविषये अपमानकरं वाक्यं वदन्तीम् एतां सम्यक् बोधयतु'' इति ।

धर्मवीरः भारतीं दृष्ट्वा कुपितः सन् -

''पश्यतु । एषः पतिपत्न्योः सम्बद्धः विषयः । भवती अत्र मा प्रविशतु'' इति उक्तवान् ।

धर्मवीरस्य एतत् वचनं श्रुत्वा भारती स्तब्धा अभूत् । तस्याः मुखं विवर्णम् अभवत् । तत्रापि भ्रातृजायायाः पुरतः जातम् अपमाननं सोढुं न शक्ता सा । तया उक्तम् - ''भ्रातः ! किमेतत् ? भ्रातृजाया अस्माकं गृहविषये अन्यथा वदन्ती अस्ति । भवान् तत् श्रुत्वा अपि मौनेन स्थितः'' इति ।

तावता सावित्री भारतीं भर्त्सयन्ती - ''आवयोः मध्ये भवत्याः हस्तक्षेपः मास्तु । अत्र भवत्याः कार्यं किमपि नास्ति । भवती स्वगृहं गच्छतु । गृहे अनेकाः समस्याः भवन्ति एव । अभिप्रायभेदोऽपि भवति एव । किञ्चित्कालानन्तरं सर्वं विस्मृत्य सर्वे सन्तोषेण भवन्ति । एतत्सर्वं भवती ज्ञातुं न प्रभवति, यतः भवत्याः एतावती बुद्धिरपि नास्ति'' इति उक्तवती ।

अनेन वचनेन भारत्याः मुखं पिहितम् अभवत् । यदर्थम् आगता तत् सर्वं विस्मृत्य सा उक्तवती - ''अहम् अग्रजं द्रष्टुम् आगता'' इति । एवं कथनसमये तस्याः मुखं विच्छायम् जातम् आसीत् ।

धर्मवीरः तस्याः वचनं श्रुत्वा कोपेन - ''मम दर्शनेन किम् ? पार्श्वस्थे मार्गे एव वासः भवत्याः । सप्ताहे न्यूनातिन्यूनं द्वित्रवारम् आगम्यते एव । अस्तु वदतु । किमर्थम् आगता भवती ?'' इति पृष्टवान् ।

अग्रजस्य वचनस्य श्रवणेन भारती स्तब्धा जाता । पतिपत्न्योः मध्ये कलहः प्रचलन् अस्ति । उभौ अपि परस्परं तिरस्कुर्वन्तौ स्तः । एतादृशे अवसरे भारती कथं वा वदेत् -



अहं पत्या सह कलहं कृत्वा आगता इति ? अतः सा वस्तुस्थितिं गोपयन्ती उक्तवती - ''किमपि नास्ति । आवां हरिद्वारं गमिष्यावः । आवाभ्यां चिन्तितं यत् भवतोः अपि आगमनं भवति चेत् वरम् इति । अतः प्रष्टुम् आगता । अत्र पश्यामि - बालौ इव कलहे मग्नौ स्तः भवन्तौ । अस्तु, अस्मिन् अवसरे आवामेव हरिद्वारं गमिष्यावः'' इति वदन्ती एव सा शीघ्रं गृहात् प्रस्थिता ।

एतावच्छीघ्रं गृहं प्रति आगतां पत्नीं दृष्ट्वा सूरजः आश्चर्यचकितः । तस्याः अग्रजस्य गृहे किम् अभवत् इति ऊहितुमपि सः न समर्थः । यत्किमपि भवतु, पत्नी एतावच्छीघ्रम् आगता इति तु तस्य सन्तोषः जातः । भारती अपि गृहम् आगत्य पाकं परिवेषणादिकं च कृत्वा मौनेन स्थितवती आसीत् ।

तस्मिन् दिने रात्रौ सन्तोषेण स्थितं पतिं भारती उक्तवती - ''आवयोः मनः कलुषितम् इव । लघुम् अपि विषयं दीर्घीकुर्वन्तौ कलहं कुर्वः । अतः एकदा हरिद्वारं गत्वा आगच्छाव । तेन मनः पूतं भवेत्'' इति ।

पत्न्यां जातेन परिवर्तनेन आनन्दम् अनुभवन् सूरजः उक्तवान् - ''अवश्यं गच्छाव । श्वः एव प्रस्थानं करवाव'' इति ।

भारती चिन्तितवती यत् एवं कृत्वा भ्रात्रा भ्रातृजायया च कृतस्य अपमानस्य प्रतीकारं करिष्यामि इति । परेद्यवि एव सा पत्या सह हरिद्वारं प्रति प्रस्थिता । एतत् धर्मवीरः सावित्री च ज्ञातवन्तौ ।

धर्मवीरः पत्न्याः बुद्धिमत्तां प्रशंसितवान् । तेन उक्तम् - ''सावित्रि ! भवत्या कृतेन उपायेन चमत्कारः एव अभवत् । भारत्या आवयोः कलहः सत्यमित्येव चिन्तितम् । भवत्याः सूचनया इदानीं तस्याः परिवारः शान्तिम् आप्नोत्'' इति ।

तदा सावित्री हसन्ती उक्तवती - ''यत् जातं तेन सुखमेव लब्धम् । इतःपरं भवतः भगिनी सप्ताहे द्वित्रवारम् एतद्गृहं प्रति न आगमिष्यति । अपि च भवता अन्येषाम् आरोपः अपि श्रोतव्यः न भविष्यति । इदानीं पार्श्वगृहसदस्याः अस्मिन् विषये तूष्णीं स्थास्यन्ति'' इति ।



# वस्तूनां क्रयणम्...

नागेन्द्रः शेखरः च प्रतिवेशिनौ । तयोः गाढा मैत्री अपि आसीत् । तौ सप्ताहे एकवारं नगरं गत्वा क्षेत्रे वर्धितानि शाकफलादीनि विक्रीय आगच्छतः स्म ।

एकदा एवं प्रत्यागमनसमये शेखरः पत्न्याः निमित्तं शाटिकाद्वयं क्रीतवान् । विविधानि पुष्पाणि, एकं सुवर्णाङ्गुलीयकं चापि क्रीतवान् ।

''एतानि सर्वाणि किमर्थं क्रीतानि भवता ? एतानि येषां कृते क्रीतानि तेभ्यः एतानि न रोचन्ते चेत् सर्वं व्यर्थं खलु ?'' इति अवदत् नागेन्द्रः ।

तदा शेखरः हसन् उक्तवान् – ''किमर्थं न रोचेरन् एतानि ? एतानि प्राप्य नितरां सन्तुष्टाः भवन्ति ते । पत्न्याः सन्तोषजननं पत्युः कर्तव्यम् । पुत्राणाम् अपि सन्तोषणं कर्तव्यम् एव । यदि तदा तदा एतादृशानि वस्तूनि दीयेरन् तर्हि ते सर्वस्वम् अपि प्राप्तम् इति भावयन्ति'' इति ।

शेखराय एतानि वचनानि अरोचन्त । ''भवता युक्तम् एव उक्तम्'' इति उक्त्वा सः आपणं गत्वा पत्न्याः पुत्राणां च निमित्तम् अनेकानि वस्तूनि क्रीतवान् । एतस्मात् तस्य मनः सन्तृप्तं जातम् ।

यदा सः गृहं प्राप्तवान् तदा एतत्सर्वं दृष्ट्वा तदीया पत्नी असन्तोषेण खेदेन च – ''अहो, एतेषां निमित्तं कियत् धनं व्ययीकृतं भवता !! न जाने, अद्य प्रातः कस्य मुखं दृष्टम् इति । प्रतिवेशिनः बालाः अस्मत्पुत्रं श्यामं सम्यक् ताडितवन्तः । रज्जुच्छेदकारणतः कूपे घटः पतितः । भवान् अपि प्राप्तं धनम् एतेषां वस्तूनां निमित्तं व्यर्थतया व्ययीकृत्य आगतवान् । रोकधनस्य आवश्यकता गृहे कियती अस्ति इति किं भवान् न जानाति ?'' इति वदन्ती अश्रूणि स्रावितवती ।





# सत्परिवर्तनम्

कस्मिंश्चित् ग्रामे रत्नाकरो नाम वैद्यः आसीत् । सः सस्यानां मूलपर्णादीनां द्वारा औषधानि निर्माय सर्वविधरोगाणाम् उपशमनं करोति स्म । कदाचित् तस्य ग्रामे क्षामः आगतः । अतः सः स्वग्रामं परित्यज्य अन्यग्रामे वासम् आरब्धवान् । तस्मिन् ग्रामे कश्चन महाधनिकः भूस्वामी आसीत् ।

रत्नाकरः एकाकी । अतः सः अल्पेन अपि आयेन दिनानि यापयितुं शक्नोति स्म । अल्पे एव काले एतस्मिन् अपि ग्रामे तदीयं नाम प्रसिद्धं जातम् । प्रतिदिनं शतशः जनाः तस्मात् चिकित्सां प्राप्नुवन्ति स्म । सर्पदंशनादिनिमित्तम् अपि सः चिकित्सां करोति स्म । निर्धनेभ्यः धनं न स्वीकरोति स्म सः । अतः अचिरात् एव तदीयं नाम समीपवर्तिषु ग्रामेषु अपि प्रसिद्धं जातम् । जनाः तं देवं भावयन्ति स्म ।

अल्पे एव काले रत्नाकरेण यत् यशः प्राप्तं तत् भूस्वामिनः असन्तोषाय जातम् । रत्नाकरस्य आगमनात् पूर्वं जनाः भूस्वामिनम् एव पूज्यं भावयन्ति स्म । इदानीं तु रत्नाकरस्य आगमनात् तस्य कीर्तिः क्षीणतां गता । अन्यच्च, भूस्वामिनः या कीर्तिः आसीत् सा आढ्यत्वकारणतः आसीत्, न तु दानपरोपकारादिकारणतः ।

भूस्वामी रत्नाकरस्य कीर्तिं क्षीणयितुम् इच्छति स्म । किन्तु तदर्थं योग्यः उपायः तेन न प्राप्तः आसीत् । ग्रामात् रत्नाकरस्य निष्कासनात्, चिकित्सातः तदीयनिवृत्तितः वा कीर्तिः न्यूनीकर्तुं शक्या आसीत् । ग्रामात् यदि भूस्वामी तं बलात् निष्कासयेत् तर्हि तस्य अपकिर्तिः स्यात् । अतः भूस्वामी निर्णीतवान् यत् कथमपि रत्नाकरः चिकित्सातः निवृत्तः यथा भवेत् तथा करणीयम् इति । किन्तु एतदर्थम् अनुकूलसमयस्य आवश्यकता आसीत् ।

कदाचित् औषधग्रन्थिं गृहीत्वा कुत्रापि गच्छन् रत्नाकरः भूस्वामिना दृष्टः प्रातःकाले एव ।

"रत्नाकरवर्य ! कुत्र गम्यते भवता ?" इति अपृच्छत् भूस्वामी ।

"पार्श्वग्रामं प्रति गच्छन् अस्मि । तत्र कश्चित् तीव्रतया अस्वस्थः इति श्रूयते । तस्य चिकित्सार्थं गच्छन् अस्मि । श्वः मम प्रत्यागमनं भवेत्" इति उक्त्वा अग्रे गतवान् रत्नाकरः ।

'एषः योग्यः अवसरः' इति अचिन्तयत् भूस्वामी । तद्दिने रात्रौ सः स्वस्य सेवकानां द्वारा रत्नाकरस्य गृहस्य भित्तौ रन्ध्रं कारयित्वा औषधकूपीः सर्वाः नाशितवान् । मूलपर्णादीनां दाहः अपि कारितः तेन ।

अनन्तरदिने रत्नाकरः गृहं प्रत्यागत्य यदा द्वारम् उद्घाटितवान् तदा औषधकूपीनां नाशं, मूलपर्णादीनां दाहं च दृष्टवान् । भित्तौ कृतं रन्ध्रम् अपि तेन दृष्टम् ।

सर्वं दृष्ट्वा रत्नाकरः अचिन्तयत् - 'भित्तौ रन्ध्रं कृत्वा येन गृहं प्रविष्टं सः विलक्षणः । सः धनवस्त्वादीनां चौर्यम् अकृत्वा औषधानां नाशं कृतवान् अस्ति । ईर्ष्याकारणतः एव एतत् कृतम् इति तु स्पष्टम् । मया तु कस्यापि अहितं न चिन्तितम् । तथापि मह्यं को वा ईर्ष्यितवान् स्यात् ?' इति ।

बहूनां मासानां परिश्रमेण रत्नाकरः यानि औषधानि सज्जीकृतवान् आसीत्, यानि मूलपर्णानि सङ्गृहीतवान् आसीत्, तानि सर्वाणि नष्टानि जातानि आसन् इदानीम् ।

चिकित्सां प्राप्तुम् आगताः जनाः रत्नाकर-



गृहे प्रवृत्तम् औषधनाशं दृष्ट्वा नितरां खिन्नाः । औषधानां नाशं कृतवन्तं ते बहुधा निन्दितवन्तः । किन्तु भूस्वामिनः मनः तु नितरां सन्तुष्टं जातम् आसीत् । सः गृहे उपविश्य रत्नाकरस्य विलापदृश्यं मनसि एव स्मरन् सन्तोषम् अनुभवन् आसीत् ।

एतदवसरे एव कश्चन सेवकः भूस्वामिपुत्रं स्कन्धेन वहन् आगत्य भूस्वामिनम् अवदत् - "आर्य ! भवत्पुत्रः क्षेत्रे सर्पेण दष्टः अस्ति । सः मूर्च्छां गतः अस्ति । प्राणापायस्थितौ अस्ति सः" इति ।

"अलं चिन्तया । रत्नाकरसमीपम् एतं नयाम । सः अपायं निवारयिष्यति" इति उक्तवन्तः तत्रत्याः ग्रामीणाः ।

सर्वे मिलित्वा भूस्वामिपुत्रं रत्नाकरसमीपं नीतवन्तः ।

भूस्वामी रत्नाकरसमीपं गत्वा दैन्येन

अवदत् – ''वैद्यवर्य ! मम पुत्रं रक्षतु कृपया'' इति ।

''अहं किं करवाणि श्रीमन् ! इदानीम् अहम् असहायोऽस्मि संवृत्तः । ह्यः रात्रौ केचन दुष्टाः मदीयं गृहम् आगत्य मम सर्वम् औषधसङ्ग्रहं नाशितवन्तः सन्ति'' इति वदन् रत्नाकरः खेदेन स्वस्य असहायकतां प्रकटितवान् ।

तदा भूस्वामी तीव्रं कशाघातं प्राप्तवान् इव । सः पश्चात्तापेन दैन्येन च अवदत् – ''रत्नाकरवर्य ! मया एव एषा दुष्टता कारिता । क्षन्तव्यः अहम् । मम पुत्रं कथमपि रक्षतु कृपया । भवतः उपकारम् आजीवनं स्मरिष्यामि । मम पुत्रं रक्षतु भोः, रक्षतु'' इति ।

''एषोऽहम् आगतः'' इति उक्त्वा रत्नाकरः वेगेन पदानि स्थापयन् ततः निर्गतवान् ।

''रत्नाकरः शीघ्रं न प्रत्यागमिष्यति । सः प्रतीकारं साधयिष्यति'' इति परस्परम् उक्तवन्तः जनाः ।

''अहं मम पुत्रं स्वयं मृत्युमुखे प्रेरितवान् । दोषः मम एव । अविचिन्त्य मया यत् कृतं तस्य फलम् अनुभवन् अस्मि'' इति वदन् उच्चैः रोदिति स्म भूस्वामी ।

ततः अल्पे एव काले प्रत्यागतः रत्नाकरः मूलपर्णादीनां रसं निर्माय भूस्वामिनः पुत्रस्य मुखे नासिकायां च पातितवान् । किञ्चित्-कालानन्तरं भूस्वामिपुत्रे चलनं दृष्टम् । पुनः अल्पे एव काले सः सचेतनः अपि जातः ।

एतस्मात् तत्र सम्मिलिताः सर्वे तृप्त्या दीर्घं निश्श्वसितवन्तः ।

एतदनन्तरं भूस्वामिनि विशेषपरिवर्तनं दृष्टम् । रत्नाकरस्य या हानिः जाता तदर्थं प्रभूतं धनं दत्तवान् सः । औषधनिर्माणाय स्वसेवकान् अपि प्रेषितवान् । रत्नाकरस्य स्थिरवासाय गृहनिर्माणादिसर्वविधव्यवस्थां च कृतवान् ।

रत्नाकरः योग्यां कन्यां परिणीय सुखेन तत्र वासं कृतवान् । सर्वे उक्तवन्तः यत् रत्नाकरस्य कारणतः भूस्वामिनि उत्तमं परिवर्तनं जातम् इति ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

16

चित्रं - पाणिः

आप्तानाम् अनुरोधस्य कारणतः सेनाधिपतिः नरेन्द्रदेवः पर्वतमन्दिरं गच्छति, यत्र च प्रथमपदे एव तस्य गर्वस्य भङ्गः भवति । तान्त्रिकः वदति यत् मम पार्श्वे उपविश्य अनुष्ठानं पश्यतु इति । नागबन्धोः भक्ताः सर्पहस्ताः सन्तः नृत्यन्तः अकस्मात् वेदनां प्राप्नुवन्ति । अनुष्ठाने विघ्नं पश्यन् तान्त्रिकः तत् स्थगयति । तस्य शत्रुः गरुडाभिधानः युवकरूपेण प्रत्यक्षः भवति ।

गुरोः सन्तुष्ट्यर्थम् आत्मना पुरुषाः स्त्रियः च कथं बलिरूपेण अर्पिताः इत्येतत् विवृणोति तान्त्रिकः ।

किं भवता उक्तं यत् गरुडः मम शत्रुः इति ?

आम् । अहम् इतःपूर्वं ५१ गरुडान् बलिरूपेण अर्पितवान् अस्मि । ते सर्वे गरुडरेखा-चिह्नाङ्किताः आसन् । अन्तिमा बलिः यावत् हस्तगता न जाता ततः पूर्वम् एव मम योजना निष्फला जाता । बलिरूपेण मया इष्टः सः गृहीतः न जातः ।


तान्त्रिकस्य वचनं श्रुत्वा नरेन्द्रदेव अवाक् जातः ।
प्रायः मम गुरोः इच्छा अस्ति यत् मम षष्टितमी बलिः भवतः राज्यस्य सः युवकः एव स्यात् इति ।
मां तस्य युवकस्य समीपं नयतु । तस्य च नाम आदित्यः इति । मम अग्रिमं कार्यम् अस्ति तस्य ग्रहणम् ।
आदित्यः ?


एतत् श्रुतवतः नरेन्द्रदेवस्य मुखे मन्दहासः विलसति ।
कः कीदृशः इति इदानीं ज्ञातम् ।
आदित्यः पर्वतस्थं गुप्तस्थानं प्राप्नोति । रागसिंहः अरुणा च तस्य स्वागतं कुरुतः ।
वयं चिन्ताक्रान्ताः सन्तः भवतः प्रतीक्षां कुर्वन्तः आस्म ।
भवान् अविलम्बेन राजानं पश्यतु ।


राजा राजधान्यां दृश्यमानां स्थितिं ज्ञात्वा नितरां चिन्ताक्रान्तः ।
तत्रत्या स्थितिः नितराम् आतङ्ककारी अस्ति । अतः मया तत्र....
अविलम्बेन गन्तव्यम् । भवान् राजभवने विश्वासार्हाणाम् अङ्गरक्षकाणां नियुक्तिं करोतु ।
महाराज ! राज-भवनस्य रक्षणव्यवस्था नरेन्द्रदेवस्य अधीना अस्ति ।


अन्यच्च, ये स्वामिभक्ताः ते सर्वे देशात् निष्कासिताः कारागारे स्थापिताः वा ।
मम आशयः अस्ति यत् यावत् नरेन्द्रदेवः रवीन्द्रदेवः च अधिकारस्थाने भवतः तावत् राजधानीं प्रति भवतः गमनं न क्षेमाय इति ।


एतत्सर्वं तत्रैव स्थित्वा श्रुतवती अरुणा किञ्चित् वक्तुम् उद्युक्ता ।
रामसिंहः तद्गणीयाः च विशेषवार्ताम् आनीतवन्तः सन्ति ।
कृपया तम् अन्तः प्रेषयतु ।
सेनापतिः कञ्चित् तान्त्रिकम् उक्तवान् अस्ति यत् इन्द्रजालप्रयोगेण महाराजः मदधीनीकरणीयः इति ।
अन्या काऽपि विशेषवार्ता ?
भवतः मारणाय अपि उपायं चिन्तयति सः ।


स च राजद्रोही । सः कारागारे स्थाप्यताम् । प्रजानां पुरतः सः शूलम् आरोप्यताम् ।
नैव, अहं राजप्रासादम् एव गमिष्यामि । प्रजाः एव मम प्राणाः । तेभ्यः दूरे स्थितिम् अहम् इतोऽपि न सहे ।
यथाज्ञापयति महाराजः ।
आदित्यः सूचितवान् यत् नूतने नगरक्षेत्रे वासः एव वरम् इति ।


अहं प्रजाः वदिष्यामि यत् कुतन्त्रकारिणां विरुद्धं कार्यं कर्तुं सङ्घटिताः भवन्तु इति ।
प्रजानां साहाय्येन अहं यत् भवेत् तत् धैर्येण सम्मुखीकरिष्यामि ।


रामसिंह ! भवान् आदौ गत्वा सर्वान् वदतु यत् अचिरात् एव महाराजः अहं राजधानीं प्रत्यागच्छन् अस्मि इति ।
अस्तु महाराज !
रामसिंह ! महाराजस्य रक्षणाय यथोचितं व्यवस्था करणीया भवता ।


महाराज ! अहं राज-भवने वार्ता प्रसारयिष्यामि यत् भवान् प्रत्यागच्छन् अस्ति इति । एषा अरुणा भवता सह स्थास्यति ।
दुष्टशक्तितः महाराजस्य मातृभूमेः च रक्षणं मम आद्यं कर्तव्यम् अस्ति ।
अनुवर्तते

पारितोषिकं जेतु
भवता सर्जनशीलतायाः
उपयोगं कुर्वन्तु

भागग्रहणार्थं बालानां कृते आह्वानम्

# बालविशेषे

(नवेम्बर् २००२ सञ्चिका)

**बाललेखकेभ्यः** – आकर्षकशिरोनामयुक्तां, ५०० शब्दयुक्तां स्वलिखितकथां प्रेषयन्तु । कथाः एतासु भाषासु भवितुम् अर्हन्ति – आङ्ग्ल, हिन्दी, बेङ्गालि, ओरिया, मराठि, गुजराती, तेलुगु, कन्नड, तमिल् तथा मलयालम् । एकः अधिकाधिकं तिस्रः कथाः प्रेषयितुम् अर्हति । चिताः कथाः नवेम्बर् २००२ बालविशेषस्य द्वादशभाषासञ्चिकासु अपि प्रकाशयिष्यन्ते ।

**बालकलाविद्भ्यः** – भारतीयपरम्परा-पुराणसाहित्य–इतिहासानां सुपरिचित-घटनावलिम् अधिकृत्य लिखितानि अधिकाधिकं त्रीणि चित्राणि प्रेषयितुम् अर्हन्ति (लिखितविवरणसहितम्) । बालविशेषे प्रकाशनाय चितानां कथानां/विषयाणां विवरणं कर्तुं चिताः कलाविदः चेन्नै प्रति आहूयन्ते । (गमनागमनव्ययः दीयते)

अन्तिमदिनाङ्कः आगस्ट् ३१, २००२

## ग्रहणार्थम् आकर्षकाणि पारितोषिकाणि

भावचित्रम् : कथा/चित्र-प्रेषणसमये भवताम् एकं भावचित्रं योजयन्तु ।

(अधः विद्यमानं पत्रं कर्तयित्वा, विवरणं पूरयित्वा भवतां कथया/चित्रेण सह प्रेषयन्तु । एतं सङ्केतं प्रति प्रेषयन्तु – **बालविशेषस्य स्पर्धा**, चन्दमामा इण्डिया लिमिटेड्, ८२, डिफेन्स् आफिसर्स् कालोनि, एक्कत्तुतङ्गल्, चेन्नै – ६०० ०९७)

नाम.................................................वयः/जन्मदिनाङ्कः .......................

कक्ष्या.........................विद्यालयः...................................................

गृहसङ्केतः.....................................................पिन् कोड् ...................

स्पर्धाविवरणम् : –

१. ..................

२. ..................

३. ..................

अहम् अत्र प्रमाणीकर्तुम् इच्छामि यत् मम पुत्रेण/पुत्र्या कृतमेतत् मूलं स्वपरिश्रमेण कृतमस्ति । एतस्य अन्यभाषासु प्रकटनार्थं वैद्युतमाध्यमेषु उपयोगार्थं च चन्दमामायाः पूर्णः अधिकारः अस्ति इत्यत्र मम पूर्णः अङ्गीकारः अस्ति ।

स्पर्धालोः हस्ताङ्कनम् पालकस्य हस्ताङ्कनम्

# कालोऽयं मनोविनोदस्य

## एकत्रैव बहूनि कार्याणि

चित्रं तु एकमेव । किन्तु अत्र करणीयानि कार्याणि सन्ति बहूनि । आदौ एतत् चित्रं वर्णैः रञ्जयन्तु । ततः वदन्तु - पिपीलिकाचित्रे कः लोपः अस्ति इति । तदनन्तरम् अन्विष्य वदन्तु यत् कयोः पतङ्गयोः समानता अस्ति इति ।








## अखण्डरेखाचित्रम्

चित्रस्थस्य हंसस्य वैशिष्ट्यं किम् इति किं भवद्भिः ज्ञायते ? अखण्डरेखया चित्रितम् एतत् । चित्रे स्थापितां लेखनीम् अनुसरद्भिः रेखायाः अखण्डता परीक्ष्यताम् ।

# पिपीलिकाचित्रम्



किं भवन्तः कलाकाराः भवितुम् इच्छन्ति ? अत्र दर्शितानि सरलानि सोपानानि अनुसरन्तः भवन्तः अपि लिखन्तु पिपीलिकाम् ।



# वृद्धचित्रे जीविनः

अत्रास्ति कश्चन वृद्धः । एतस्य श्मश्रु सुदीर्घम् अस्ति खलु ? चित्रं तदेकदृष्ट्या पश्यन्तु । तदा चित्रे बहवः जीविनः निहिताः दृश्यन्ते । तत्र कति जीविनः भवद्भिः अभिज्ञाताः ?




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका





वृषभवाहनो विन्दामि मुदम् ।
'कार्'वाहकः नन्दामि सदा ॥

## अभिनन्दनानि

'जून्'मासीयस्पर्धाशीर्षिकाप्रेषकः -

के.आर्.वेदनारायणन्

*सत्यसायि-उन्नतमाध्यमिकविद्यालयः*

*प्रशान्तिनिलयम् - ५१५ १३४ (आ.प्र)*

उत्तरम्
मनोविनोदस्य
(पृ - ६४)




एकत्रैव बहूनि कार्याणि

पिपीलिकायाः एकः पादः नास्ति ।



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

Book Your Copy Now

CHANDAMAMA'S

# EARLY READER series

# JATAKA TALES



Early Reader series

JATAKA TALES

Level 1





CHANDAMAMA

JATAKA TALES - Early Reader Series (Level 1) teaches children to instantly recognise 100 sight words in English. It promises clean fun, good learning and a superior pedagogical approach.

It is the first of a 3-series pack.

These CD-ROMs can also be used for any ESL (English as Second Language) course or Adult education programs that teach English.

*For more details, Contact :* Chandamama India Limited, 82, Defence Officers' Colony, Ekkattuthangal, Chennai - 600 097. Ph : 234 73 99, 234 73 84

